# यत् प्रचलति तत् प्रधानम्।

अपि चेत् स दुराचारो
भजते माम् अनन्यभाक्।
साधुरेव स मन्तव्यः
सम्यग् व्यवहितो हि सः।।

(भगवद्गीता)

भगवान् श्रीकृष्णः वदति- 'कश्चित् दुराचारी भवेत् नाम। किन्तु यदि अनन्यमनसा परमात्मनः मम सेवां करोति तर्हि सः सज्जनः भविष्यति। यतः सः मम स्मरणात् ऋते किमपि अन्यत् न अपेक्षते' इति।

करुणार्णवस्य भगवतः दया असदृशी। सः भक्तस्य अनन्यमनस्कतां तदीयभक्तेः तीव्रतां च परिगणयति। जातिकुलादिकं वा, सामाजिकयोग्यतां वा सः कदापि न परिगणयति। यः परमभक्तः तम् अभीष्टप्रदानेन अनुगृह्णाति।

भगवतः एतादृशं व्यरहारं दृष्ट्वा तुकारामः निन्दाव्याजेन स्तुतिं करोति-

"दुन्ध झालि तुझा दरबारि। सरकार पाण्डुरङ्ग अन्धेरि।"

"हे पाण्डुरङ्ग! न्यायान्याय-विवेचनरहितस्य भवतः अन्धशासनम्" इति।

तुकारामः उदाहरणानि प्रदर्शयति- "पश्यतु भोः! भवान् पुण्यशालिनं बलिचक्रवर्तिनं पातालं प्रेषितवान्। दरिद्रं सुदामं कुबेरपदवीम् आरोपितवान्। स्यमन्तकमणेः अपहारकः महाभक्तः संवृत्तः! भक्तः अम्बरीषः अपमानितः जातः। दुष्टः शिशुपालः मुक्तिं प्राप्तवान्। बालः ध्रुवः त्रैलोक्यपदव्यां प्रतिष्ठापितः। पतिव्रता द्रौपदी कष्टपरम्पराम् अनुभूतवती। काचित् वेश्या मुक्तिं प्राप्तवती। किं भोः भगवन्! भवता कृताः अनर्थाः एते!" इति।

बहवः चिन्तयन्ति- मया पूर्वं बहूनि सत्कार्याणि कृतानि इति। किन्तु ते सद्यः क्रियमाणानि कार्याणि विस्मरन्ति। भगवतः दृष्ट्या तु इदानीं यत् प्रचलति तत् प्रधानम्। इदानीं यः सज्जनः, इतःपरम् अपि सद्व्यवहारम् आचरति इति यस्मिन् विश्वासः, तादृशे जने भगवान् कृपां प्रदर्शयति।

स्मरतु भ्रातः, पूर्वं कृतानां सत्कर्मणां बलेन भवान् कीर्तिं सद्गतिं वा न प्राप्स्यति। इदानीम् अपि सत् व्यवहरतु। इतःपरं कदापि सद्व्यवहारव्रतं न परित्यजतु। तदा एव भवतः कीर्तिः सद्गतिः वा।

# नूतनाः शब्दाः

शिष्यः – श्रीमन्! यदा वयं सम्भाषणार्थम् उद्युक्ताः भवामः तदा प्रथमा समस्या – नूतनशब्दानां विषये। दैनन्दिनजीवने तु Table, Chair, Bucket, Radio इत्यादयः ओतप्रोततया सम्मिलिताः सन्ति। तैः विना व्यवहारः एव न प्रचलति। अतः सहजतया सम्भाषणे अपि तेषाम् उपयोगः पौनःपुन्येन भवति एव। किन्तु संस्कृतभाषया तानि वस्तूनि कथं निर्देष्टव्यानि इति वयं न जानीमः। एतानि वस्तूनि नूतनतया आविष्कृतानि इत्यतः कोशेषु अपि ते शब्दाः न उपलभ्यन्ते ...।

आचार्यः– नूतनशब्दानां विषये समस्या तु अस्ति एव। सहस्रशः वर्षाणि यावत् सम्भाषणपरम्परा एव उच्छिन्ना आसीत्। तेन तत्तत्काले उपयुज्यमानाः शब्दाः संस्कृते न निर्मिताः। अतः पदे पदे एषा समस्या बाधते इति तु सत्यम् एव।

शि –कः परिहारोपायः? कथं व्यवहारः?

आ –एकः तु उपायः – तादृशानां शब्दानां निर्माणम्। निर्मितानाम् आधुनिकशब्दानां सङ्ग्रहः वा।

शि –तत्रापि क्लेशः एव। नूतनशब्दनिर्माणे पाण्डित्यम् अनुभवः च महान् अपेक्षितः। निर्मितानां सङ्ग्रहणम् अपि न सुलभम्। यतः देशः विशालः, विरलः सम्पर्कः।

अन्यच्च एकैकः अपि स्वमत्यनुगुणं शब्दान् निर्माति। एवं निर्मितेषु कः शब्दः स्वीकरणीयः इति पुनरपि समस्या। अतः सङ्घटितः कोऽपि प्रयत्नः पण्डितैः कृतः चेत् तदा भवत्सूचितः एषः उपायः प्रयोजनकारी स्यात्।

आ –द्वितीयः अतिसरलः मार्गः – नूतनशब्दानां विषये विशेषचिन्तनम् अकृत्वा तत्तत्सन्दर्भानुगुणं ते ते प्रान्तीयाः शब्दाः एव प्रयोक्तव्याः।

शि –तन्नाम – संस्कृतवाक्ये प्रान्तीयशब्दाः मध्ये मध्ये प्रयोक्तव्याः इति वा अभिप्रायः?

आ – आम्। तथा प्रयुक्ते कः दोषः?

शि –एवं कुर्मः चेत् संस्कृतत्वं भज्येत किल?

आ – किमर्थं तथा चिन्तयति? प्रान्तीयभाषासु किम् एतादृशः व्यवहारः नास्ति? प्रान्तीयभाषाशब्देषु सत्सु अपि बहवः तान् परित्यज्य आंग्लादिशब्दानाम् उपयोगं कुर्वन्ति। Road, Picture, Class, Note book इत्यादयः असङ्ख्याः शब्दाः निर्बाधं प्रयुज्यन्ते एव किल? ताः इव संस्कृतम् अपि एका भाषा। अतः अत्रापि मध्ये मध्ये इतरभाषीयशब्दानाम् उपयोगः न अपराधाय।

शि –प्रान्तीयभाषायां तु संस्कृते इव विशेषचिन्तनम् एतादृशविषयेषु नास्ति किल? तत्र तु आंग्लादिशब्दानां विभक्तियोजनम् अपि अनुमतम्। तासु भाषासु तत् सहजम्। किन्तु संस्कृतं तथा न किल?

आ – भोः, इतरभाषीयशब्दानाम् (संस्कृते अव्युत्पन्नानाम्) विभक्तियोजनं तु न करणीयम्। टेबल्लस्य, पिक्चरे इत्यादयः प्रयोगाः सर्वथा परिहर्तव्याः। तादृशाः शब्दाः अव्ययत्वेन प्रयुक्ताः चेत् का हानिः? 'पेपर् पठितवान् वा?' 'फोटो कुत्र?' 'स्विच् आन् करोतु' इत्यादयः प्रयोगाः कुतः न करणीयाः?

शि –तथापि ..... ।

आ – पश्यतु, अव्ययत्वेन तेषां परिगणनम् इत्यतः व्याकरणानुग्रहः तु अस्ति एव। सर्वथा सम्भाषण-अकरणापेक्षया तु एतत् वरं किल? किन्तु सदा एषा एव रीतिः न भवेत्। शब्दानां सङ्ग्रहणे प्रवृत्तिः, सङ्गृहीतानां प्रयोगे निरन्तरता च भवेत्।

सम्भाषणशीलता प्रवृत्तौ आनेतव्या इति तु लक्ष्यम्। तदर्थं व्याकरण-अविरुद्धाः केचन सरलाः व्यावहारिकोपायाः प्राथमिके स्तरे आश्रयणीयाः। अनन्तरकाले सहजताविषये आग्रहः प्रदर्शनीयः।





# चन्दमामा

जनवरी-१९८७

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. २-५०

वार्षिकं ग्राहकशुल्कं रू. ३०-००

# चन्दमामा

संस्थापकः – 'चक्रपाणिः' सञ्चालकः – 'नागिरेड्डी'

संशोधनं सर्वेषु क्षेत्रेषु अनिवार्यम्। बह्व्यः संस्थाः एतदर्थं लक्षशः रूप्यकाणि व्ययीकुर्वन्ति। यद्यपि एतदर्थं धनव्ययः श्रमः च महान्, तथापि एतत् अनिवार्यम् इति ताः चिन्तयन्ति।

भाषाक्षेत्रेषु अपि संशोधनम् अनिवार्यम्। परिवर्तनशीला हि भाषा। यदि तत्र प्रगतिः अपेक्षिता तर्हि नूतनसंशोधनम् अपि अनिवार्यम्। संस्कृतभाषायां संशोधनानि प्रचलन्ति एव। किन्तु कीदृशानि? कस्यचित् ग्रन्थस्य सम्पादनम्, ग्रन्थे प्रतिपादितस्य तत्त्वस्य अलङ्कारादीनां वा विवेचनम् इत्यादयः सामान्यतः प्रचलन्ति। नूतनसंशोधनानि विरलानि एव।

ग्रन्थसम्पादनादिकम् अप्रयोजकम् इति न। तदपि करणीयम् एव। यतः अप्रकाशिताः अमूल्यग्रन्थाः बहवः ताडपत्रनिबद्धाः सन्ति। तेषां प्रकाशनम् अपि करणीयम् एव।

किन्तु किम् एतावता एव सन्तोष्टव्यम्? इतरभाषासु इव संस्कृते अपि नूतनं संशोधनं कुतो वा न करणीयम्? इदानीं तु तटाकस्थजलम् इव अस्ति संस्कृतम्। एषा भाषा तदा एव प्रवहनशीला भवेत् यदा च नूतनसंशोधनानि विपुलतया क्रियमाणानि भवन्ति।

सम्पुटः - ३ जनवरी-८७ सञ्चिका - १०

प्रतिकृतिमूल्यं रू. २-५० * वार्षिकं ग्राहकशुल्कं रू ३०-००






रसप्रश्नाः

# सुप्रसिद्धाः के एते?

(अधः दम्पत्योः नाम सूचितम् अस्ति। तयोः पुत्रः पुत्री वा सुप्रसिद्धौ। सुप्रसिद्धानाम् एतेषां परिचयप्राप्त्यर्थम् एकैकं वाक्यम् अपि अधः सूचितम् अस्ति। ते के इति ज्ञातुं प्रयत्नं कुर्वन्तु।)

१. * मातापितरौ— सत्यवती-पराशरः।
   * इतिहासत्वेन प्रसिद्धम् एकं ग्रन्थं लिखितवान्।
२. * मातापितरौ— कृपी-द्रोणाचार्यः।
   * क्षत्रियराजानां नाशार्थं बहुवारं भूपरिक्रमणं कृतवान्।
३. * मातापितरौ— इतरा-माण्डूकिमुनिः।
   * एतस्य नाम्ना एका उपनिषत् प्रसिद्धा अस्ति।
४. * मातापितरौ— शान्तिः-अथर्वणः।
   * देवतानां हितार्थम् स्वकीयानि अस्थीनि एव अर्पितवान्।
५. * मातापितरौ— अदृश्यन्ती-शक्तिमहर्षिः।
   * स्मृतिकारेषु अन्यतमः एषः।
६. * मातापितरौ— अनसूया-अत्रिमहर्षिः।
   * कोपविषये सुप्रसिद्धः महर्षिः।
७. * मातापितरौ— देवहूतिः-कर्दममुनिः।
   * पतिव्रतास्त्रीषु अन्यतमा। ब्रह्मविष्णुमहेश्वरान् शिशून् कृतवती आसीत्।
८. * मातापितरौ— सुमतिः-सगरचक्रवर्ती।
   * औद्धत्येन ख्यातः, पित्रा राज्यात् बहिष्कृतः च आसीत्।
९. * मातापितरौ— कला-मरीचिमहर्षिः।
   * सप्तर्षिषु अन्यतमः।

उत्तराणि—

१. व्यासः। २. अश्वत्थामा। ३. ऐतरेयः। ४. दधीचिः। ५. पराशरः।
६. दुर्वासाः। ७. अनसूया। ८. असमञ्जः।९. कश्यपः।

# रसवार्ता:



## असदृशं मित्रम्!

नेपल्सुप्रान्ते कदाचित् कस्मिंश्चित् गृहे अकस्मात् अग्निस्पर्शः अभवत्। तदा तद्गृहसदस्यैः पालितः 'राशि' नामकः शुनकः त्रिवर्षीयं शिशुम् अग्नितः रक्षितुम् अग्नौ प्राविशत्। शिशुम् आकर्षन् बहिः आनयत् च। किन्तु अन्ते इतरेषां रक्षणार्थं गतः सः शुनकः स्वयं अग्नौ दग्धः अभवत्।

## नेपोलियन्कालीना नौका



नैलयुद्धतः एकमासतः पूर्वं १७९८ तमे सवंत्सरे जुलै प्रथमदिनाङ्के नेपोलियन् पक्षस्य 'लेपिट्रियल्' नामिका नौका ईजिप्ट्समुद्रे निमग्ना अभवत्। १८८ वर्षाणाम् अनन्तरम् इदानीं तां नौकाम् फ्रेञ्चसंशोधकाः अन्विष्टवन्तः सन्ति!



## अपूर्वा दूरवाणी

एषु दिनेषु काचित् अपूर्वा दूरवाणी अन्विष्टा अस्ति या च क्षणाभ्यन्तरे भावचित्रं स्वीकृत्य अन्यस्मै प्रेषयितुं समर्था!

# चोलराजः विष्णुदासः च

काञ्चीपुरस्य परिपालकः चोलराजः श्रेष्ठः विष्णुभक्तः। एकदा पर्वदिने सः रत्नहारेण सुवर्णपुष्पादिभिः च सह विष्णुमन्दिरं गतवान्। ततः पूर्वम् एव तत्र आगतः विष्णुदासः नाम निर्धनः भक्तः विष्णुविग्रहं तुलसीमालया अलङ्कृतवान् आसीत्। एतत् दृष्टवतः चोलराजस्य मनसि असमाधानम्। 'पुण्ये पर्वदिने देवस्य एतादृशः सामान्यः अलङ्कारः वा?' इति चिन्तयन् सः सुवर्णाभरणैः देवं विशेषतया अलङ्कृत्य दानधर्मादिकं मुक्तहस्तेन कृत्वा वैभवेन पूजां निर्वर्तितवान्।

विष्णुदासः ततः निर्गत्य एकस्मिन् निर्जने प्रदेशे विष्णुविग्रहं प्रतिष्ठापितवान्। भिक्षया तण्डुलान् सङ्गृह्य अन्नं कृत्वा, नैवेद्यरूपेण समर्प्य पूजां समापयति स्म सः। पूजानन्तरं यदा सः ध्याने मग्नः भवति स्म तदा कश्चित् आगत्य नैवेद्यम् अपहृत्य पलायनं करोति स्म। विष्णुदासः एतत् लक्षितवान्। एकदा विष्णुदासः ध्यानमग्नः यदा आसीत् तदा चोरः आगतवान्। विष्णुदासः नेत्रे उद्घाटितवान्। तदा भीतः सः निर्धनः नैवेद्यम् अस्वीकृत्य एव पलायनं कृतवान्। विष्णुदासः नैवेद्यम् उन्नीय आह्वयन् तम् अनुसृतवान्। किञ्चिद्दूरं गमनानन्तरं धावितुम् अशक्तः सः निर्धनः मार्गे मूर्च्छां गतवान्। विष्णुदासस्य शैत्योपचारानान्तरं सः सचेतनः जातः। तदा विष्णुः प्रत्यक्षीभूय विष्णुदासम् आलिङ्ग्य आत्मनि लीनं कृतवान्।

एतां वार्तां चोलराजः अपि श्रुतवान्। 'मया यज्ञयागादिकं यथेष्टं कृतम्। दानादिकम् अपि कृतम्। किं तत्सर्वं निष्फलम्? तादृशं किमपि अकृत्वा एव सः निर्धनः विष्णुदासः देवस्य दयायाः पात्रम् अभवत्' इति चिन्तयन् सः प्राणत्यागार्थं सिद्धः अभवत्।

तदा विष्णुः प्रत्यक्षीभूय– "राजन्! भवान् विष्णुदासः च अपि भक्तौ एव। आत्मनः शक्त्यनुसारं भवन्तौ मां सेवितवन्तौ। भवति कश्चन अहङ्कारः आसीत्। तस्य निवारणार्थम् अहम् एवं कृतवान्" इति बोधयित्वा तस्य सान्त्वनं कृतवान्।





# विवाहनियमः

कस्मिंश्चित् काले चन्द्रकान्तनामकः युवकः वसन्तगिरिराज्यस्य राजा अभवत्। सः कदाचित् प्रातः सूर्योदयसमये अश्वम् आरुह्य विहारार्थम् एकाकी एव समीपे विद्यमानम् अरण्यं प्रस्थितः। तत्रत्यं सुन्दरं तटाकं दृष्ट्वा सन्तुष्टः सः तस्मिन् स्नानं कृत्वा तटाकतीरम् आगतवान्। तस्मिन् समये काचित् व्याधयुवती तेन एव मार्गेण गृहं गच्छन्ती आसीत्। तस्याः सौन्दर्यं कोमलतां च दृष्ट्वा चन्द्रकान्तः आकृष्टः।

अश्वारूढः चन्द्रकान्तः ततः प्रस्थाय राजभवनं प्रति आगतवान्। व्याधयुवती परिणेतव्या इति तस्य महती इच्छा जाता। प्रतिनिमेषम् अपि सः तद्विषये चिन्तयति स्म। किन्तु 'एकस्य देशस्य राजा अहम्। मम एतादृशः विवाहः उचितः वा?' इति संशयः अपि तं बाधते स्म।

राजा अन्यमनस्कः इति चिन्तितवान् मन्त्री देववर्मा तस्य समीपम् आगत्य पृष्टवान्– "महाराज, भवतः पुरतः महती समस्या अस्ति इति मन्ये। सा कीदृशी समस्या इति ज्ञातुं शक्नोमि वा?" इति।

तदा चन्द्रकान्तः रहस्यं किञ्चिदपि अगोपयन् उक्तवान्– "अहम् अरण्यसमीपं गतवान्। तत्र काञ्चित् व्याधयुवतीं दृष्टवान्। मम मनः तस्याम् एव संलग्नम्। सा एव परिणेतव्या इति इच्छा अस्ति। किन्तु देशपालकस्य महाराजस्य मम एतादृशं कार्यम् उचितं वा? इति प्रश्नः बाधते। तदेव चिन्तयन् अस्मि" इति।

मन्त्री क्षणकालं चिन्तितवान्। "अत्र धर्माधर्मयोः प्रश्नः एव नास्ति" इति उक्त्वा महाराजकिरीटस्य वज्रं प्रदर्शयन् उक्तवान्– "कस्मिंश्चित् काले भूमौ आसीत् एतत् वज्रम्। उपयोगे आनीतम् इति कारणतः अस्य मूल्यम् अधिकं जातम्। भवतः किरीटम् अलङ्कृतं च। तस्यै व्याधयुवत्यै एकवर्षाभ्यन्तरे एव

राजोचिताः विद्याः पाठयितुं शक्यते। अनन्तरं यदि भवान् तां परिणेष्यति, तर्हि प्रजानाम् अपि आदर्शः भविष्यति। श्वः एव अहं सपरिवारं तस्याः गृहं गच्छामि" इति।

मन्त्रिणः वचनानि श्रुत्वा तृप्तः चन्द्रकान्तः उक्तवान्– "भवतः गमनं मास्तु। अहम् एव गमिष्यामि। यतः अहं तां दृष्टवान्। तया अपि अहं द्रष्टव्यः किल" इति।

अनन्तरदिने चन्द्रकान्तः तस्याः गृहं गतवान्। सा युवती व्याधप्रमुखस्य पुत्री 'चम्पकवल्ली' इति ज्ञातम्।

व्याधप्रमुखः महाराजाय योग्यम् आतिथ्यं कृतवान्, पृष्टवान् च– "महाराज, भवान् स्वयम् अस्माकं वसतिप्रदेशम् आगतवान्। महान् सन्तोषः। भवतः आगमनस्य कारणं ज्ञातुं शक्नोमि वा?" इति।

चन्द्रकान्तः द्वारस्य पार्श्वे स्थिता चम्पकवल्लीं प्रदर्शयन् उक्तवान्– "यदि सा इच्छति, तर्हि अहं तां परिणेतुं सिद्धः अस्मि। एतं विषयं वक्तुम् एव अहम् अत्र आगतवान्" इति।

एतत् वचनं श्रुत्वा चम्पकवल्ली झटिति अन्तः गतवती। व्याधप्रमुखः अपि अन्तः गत्वा कुटुम्बसदस्यैः सह एतद्विषये वार्तालापं कृतवान्। किञ्चित्कालानन्तरं बहिः आगत्य महाराजम् उक्तवान् च– "क्षाम्यतु महाराज, एषः विवाहः सुलभ-साध्यः न। विवाहः भविष्यति चेत् अपि विवाहानन्तरं चम्पकवल्ली भवता सह न आगमिष्यति। सा अत्रैव स्थास्यति। प्रायः एषः नियमः भवते न रोचेत" इति।



एतत् वचनं श्रुत्वा चन्द्रकान्तः आश्चर्यचकितः। "विवाहानन्तरम् अपि मम पत्नी मया सह यदि राजभवनं न आगमिष्यति तर्हि विवाहस्य अर्थः एव नास्ति" इति उक्त्वा खिन्नः महाराजः नगरं प्रति गतवान्।

एतं वृत्तान्तं श्रुत्वा मन्त्री देववर्मा कुपितः। तथापि कोपस्य नियन्त्रणं कुर्वन् महाराजं पृष्टवान्– "इदानीम् अपि सा एव परिणेतव्या इति इच्छा भवतः मनसि अस्ति वा?" इति।

चन्द्रकान्तः 'आम्' इति शिरश्चालनपूर्वकं सूचितवान्। "किं करणीयम् इति चिन्तयन् अस्ति?" इति पृष्टवान् मन्त्री।

"तस्याः पित्रा सूचितस्य नियमस्य विषये किं करणीयम् इत्येव चिन्ता" इति उक्तवान् राजा।

मन्त्री देववर्मा चिन्तयन् किञ्चित् कालं मौनम् उपविष्टवान्। अनन्तरम् "इदानीं मह्यम् अनुमतिं ददातु महाराज" इति उक्त्वा ततः निर्गतवान्।

अनन्तरदिने मन्त्री देववर्मा चन्द्रकान्तस्य समीपम् आगत्य– "विहारार्थम् उद्यानं गच्छावः, आगच्छतु" इति वदन् महाराजं नीतवान्।

द्वौ अपि उद्याने विहरन्तौ आस्ताम्। तत्र दासीनां मध्ये राजकन्या इव उपविष्टां चम्पकवल्लीं दृष्टवान् राजा।

चन्द्रकान्तः आश्चर्येण देववर्माणं दृष्टवान्। तदा मन्दस्मितः मन्त्री उक्तवान्– "महाराज, रात्रौ आयुधहस्ताः केचन भटाः,चतस्रः दास्यः च व्याधानाम्



अग्रहारं गतवन्तः। अहम् एव 'एताम् आनयन्तु' इति तान् प्रेषितवान्। तस्याः पिता वा, अन्ये जना वा अस्याः आनयनसमये विरोधं न कृतवन्तः। देशपालकस्य महाराजस्य अपेक्षा तिरस्क्रियते चेत् महान् प्रमादः इति ते जानीयुः'' इति।

मन्त्रिणः कार्येण चन्द्रकान्तः न सन्तुष्टः। खेदम् अनुभवन् सः उक्तवान्– ''भवता एवं न करणीयम् आसीत्। बलात्कारेण वा आग्रहेण वा इच्छाविरुद्धं कार्यं केनापि न करणीयम्। तेन उभयपक्षयोः अपि सुखं नास्ति। अद्य सायम् अहम् एव स्वयं गत्वा तस्याः पित्रे एतां प्रत्यर्प्य आगच्छामि'' इति।

इदानीं मन्त्री देववर्मा खिन्नः। चन्द्रकान्तः चम्पकवल्लीं तस्याः गृहं नीतवान्।

तस्याः पिता बन्धुजनैः सह महाराजं स्वागतीकृत्य उक्तवान्– ''महाराज, भवतः प्रेमपरीक्षां कर्तुम् एव अहं विवाहार्थं नियमम् उक्तवान्। यदा भवान् प्रथमवारम् अत्र आगतवान्, तदा मम पुत्र्याः इच्छा अस्ति चेत् तां परिणेष्यामि इति उक्तवान्। तदा एव भवतः उदारतां ज्ञातवान् अहम्। किन्तु विवाहानन्तरं मम पुत्री युवराज्ञी भवितुं न अर्हति इति भवान् वदेत् इत्यपि भयम् आसीत्। पुत्र्याः योगक्षेमदायित्वं पितुः कर्तव्यम् इति विचिन्त्य मया एकः नियमः उक्तः। या काचित् स्त्री भवतु, सा पत्या सह एव स्थातुम् इच्छति। इदानीं भवतः उद्देशः स्पष्टतया ज्ञातः। भवान् एव स्वयम् एताम् आनीतवान्। भवतः मन्त्री अपि भवतः इच्छाविरुद्धम् एव तथा आचरितवान् इत्यपि ज्ञातवान्। भवान् किं करोति इति ज्ञातुम् एव नयनसमये विरोधं न कृतवान् अहम्'' इति।

एतत् श्रुत्वा राजा चन्द्रकान्तः अतीव सन्तुष्टः। शीघ्रातिशीघ्रमेव शुभमुहूर्ते चम्पकवल्ल्या सह चन्द्रकान्त-महाराजस्य विवाहः सवैभवं सम्पन्नः।

चम्पकवल्ली एकवर्षाभ्यन्तरे एव राजोचिताः सर्वाः विद्याः अपि ज्ञात्वा 'महाराजस्य अनुरूपा युवराज्ञी' इति योग्यताम् अपि प्राप्तवती।





# प्रातिवेशिकः

शृङ्गपुरनामके ग्रामे रङ्गराजः नाम धनिकः आसीत्। ग्रामस्य मध्यभागे एव तस्य गृहम्। अट्टद्वयेन निर्मिते गृहे वसति स्म रङ्गराजः। तस्य गृहस्य पार्श्वे एव मृच्छदस्य पुरातनम् एकं गृहम् आसीत्। तस्मिन् गृहे शिवानन्दः नाम दरिद्रः वसति। रङ्गराजस्य वक्रदृष्टिः तु शिवानन्दस्य गृहविषये एव।

शिवानन्दसदृशः निर्धनिकः स्वस्य प्रातिवेशिकः इति विषयं रङ्गराजः सोढुं न शक्नोति। सः कथञ्चित् तत् गृहं त्यक्त्वा गच्छेत् इति रङ्गराजः बहुधा प्रयत्नं करोति। किन्तु केनापि प्रयत्नेन शिवानन्दः दूरं न गतः।

"भोः शिवानन्द! भवतः दरिद्राः कुक्कुटाः मम परिसरम् आगत्य सर्वाणि सस्यानि नाशयन्ति। यदि भवान् तेषां रक्षणं कर्तुं न शक्नोति, तर्हि किमर्थं तान् पोषयति?" इति एकवारं निन्दति।

अन्यस्मिन् दिने तर्जयति— "भवतः गृहतः आगतं मलिनं जलं सर्वं मम गृहस्य पुरतः एव प्रवहति। एतत् महत् अन्याय्यम्" इति। पुनरपि तर्जयति— "कतिवारं वदामि। तथापि न शृणोति किल? अस्य कः अर्थः? भवतः मनुष्यत्वं नास्ति वा? अन्यस्मै कष्टं न दातव्यम् इति न जानाति वा?" इति।

रङ्गराजस्य कोपं गर्जनादिकं च दृष्ट्वा अपि शिवानन्दः मौनं तिष्ठति। किं करणीयम् इति रङ्गराजः बहु चिन्तयति। एकस्मिन् दिने शिवानन्दं स्वगृहम् आनाय्य कोपेन वदति— "पश्यतु शिवानन्द, न केवलं भवता पाल्यमानैः कुक्कुटैः उपद्रवः, भवतः पुत्रैः अपि उपद्रवः एव। तेषां कारणतः अस्माकं शान्तिः एव नास्ति। तेषां कोलाहलेन मम निद्रा एव नास्ति। देवपूजां कर्तुम् अपि न शक्नोमि। भवतः गृहं दग्धं भविष्यति चेत् एव मम उपद्रवः न भवेत् इति चिन्तयामि। भोः, पार्श्वस्थानाम् अपि हितं



किञ्चित् चिन्तयतु। कीदृशः मनुष्यः भवान्? उष्णकाले भवतः पुत्राः एव भवतः गृहस्य दहनं कुर्युः। तदा अपि माम् एव आक्षिपति वा? मार्गे ये गच्छन्ति, तेषां कारणतः अपि कदाचित् अग्निः पतेत्'' इति।

गृहस्य दहनं भवेत् इति रङ्गराजस्य वचने एव सूचना आसीत्। अतः शिवानन्दस्य मनसि सन्देहः उत्पन्नः – रङ्गराजः एव मम गृहं दाहयेत् अपि इति। एतादृशस्य प्रातिवेशिकस्य पीडानां सहनापेक्षया एतस्य ग्रामस्य त्यागः एव उचितः इति चिन्तितवान् सः। धनिकैः सह विवादं कृत्वा प्रयोजनं नास्ति इत्यपि ज्ञातवान् शिवानन्दः।

अनन्तरं शिवानन्दः रङ्गराजाय एव तत् गृहं विक्रीय पत्नीपुत्रैः सह कुत्रापि गतवान्।

केचन मासाः अतीताः। नगरं गत्वा तत्र वासः करणीयः इति रङ्गराजस्य इच्छा जाता। तथैव सः नगरं गतवान्। मार्गपार्श्वे एव एकं गृहम् आसीत् विक्रयणार्थम्। तस्मिन् मार्गे जनसञ्चारः अपि अधिकः। रङ्गराजः तत् गृहं क्रीतवान्। ग्रामे विद्यमानं स्वपरिवारं तत्र नीतवान् च।

रङ्गराजः यद्दिने तत्र गतवान् तस्य अनन्तरदिने एव पार्श्वगृहे कोऽपि कोलाहलः आरब्धः। जनाः समूहरूपेण सम्मिलन्ति स्म। तत्र किं प्रचलति इति द्रष्टुम् इच्छन् रङ्गराजः तस्य गृहस्य पुरतः गतवान्।

तत्र आगतं कञ्चित् पुरुषं पृष्टवान् रङ्गराजः– ''तत्र किं प्रचलति?'' इति।

तदा सः उक्तवान्– ''अस्य गृहस्य यजमानः महता मूल्येन एतत् गृहं क्रीतवान्। तथापि एकं दिनम् अपि सः निश्चिन्ततया अत्र वासं कर्तुं न शक्नोति। अस्मिन् गृहे एकः पिशाचः वसति। येन केनापि मन्त्रेण तन्त्रेण वा सः एतत् गृहं त्यक्त्वा न गच्छति। अन्तिमः प्रयत्नः इति अस्य गृहस्य यजमानः मलयाळदेशतः आगतं कञ्चित् मान्त्रिकम् आनीतवान्। तस्य मन्त्रस्य शब्दः एव एतावत् उच्चैः श्रूयते। यः कोऽपि पिशाचः भवतु। भीत्या गच्छेत् एव। सः एव कोलाहलः'' इति।

रङ्गराजः ततोऽपि किञ्चित् अग्रे गतवान्। गृहे किं किं प्रचलति इति दृष्टवान्

च। मलयाळमान्त्रिकः पिशाचं निवारयितुम् आवश्यकानि वस्तूनि एकत्र योजयित्वा गृहस्य यजमानं उक्तवान्– "भोः शेषसेन, भवतः भयं मास्तु। दुरदृष्टवशात् भवतः गृहम् आगतः एषः पिशाचः। किन्तु मम अत्र आगमनं तु भवतः भाग्यम् एव। यावत् मम पूजा समाप्ता भवति तावति काले एषः पिशाचः गृहं त्यक्त्वा पृष्टतः अदृष्ट्वा एव धावति" इति।

शिवानन्दः आश्चर्येण तत्र सम्मिलितान् पश्यन् उक्तवान्– "मम दुरदृष्टम् एव। उत्तमं पार्श्वगृहं मया क्रेतव्यम् आसीत्। दौर्भाग्यवशात् अहम् एतत् गृहं क्रीतवान्। यतः रङ्गराजनामकः कोऽपि महान् धनिकः द्विगुणितं मूल्यं दत्त्वा पार्श्वगृहं क्रीतवान् एव। एषः एव मम अन्तिमः प्रयत्नः। एषः पिशाचः एतत् गृहं त्यक्त्वा न गच्छति चेत्, यावदपि नष्टं भवतु ,अहम् एव एतत् गृहं त्यक्त्वा गच्छामि। कथं पिशाचेन सह वसामि?" इति।

शेषसेनस्य वचनसमाप्तिसमनन्तरम् एव गृहे विद्यमानः पिशाचः उच्चस्वरेण उक्तवान्– "किम् उक्तवान् भोः शेषसेन, पार्श्वगृहं रङ्गराजः क्रीतवान् वा? सः शृङ्गपुरग्रामस्य रङ्गराजः तु न किल?" इति।

पिशाचस्य वचनं श्रुत्वा सर्वेऽपि भयभ्रान्ताः। मान्त्रिकः शेषसेनम् आश्चर्येण दृष्टवान्।

तदा शेषसेनः उक्तवान्– "आम्,



शृङ्गपुरतः आगतः रङ्गराजः एव" इति।

अपरक्षणे एव पिशाचः कर्कशस्वरेण उक्तवान्– "अहो! तर्हि अहं न केवलम् एतत् गृहम्, एतं प्रान्तम् एव त्यक्त्वा गच्छामि" इति।

मान्त्रिकः गर्वेण श्मश्रु स्पृशन् सर्वान् दृष्ट्वा उक्तवान्– "दृष्टं वा? अहम् इदानीम् अपि पिशाचस्य निवारणमन्त्रम् एव न आरब्धवान्। मां दृष्ट्वा एव सः भीत्या मृतः" इति।

तत् श्रुत्वा पिशाचः अट्टहासपूर्वकम् उच्चस्वरेण उक्तवान्– "मूर्ख, मान्त्रिक! इतः मम गमनस्य कारणं भवतः मन्त्रः अपि न, तन्त्रम् अपि न। मम नाम शिवानन्दः। जीवितकाले अहम् एतस्य रङ्गराजस्य

पार्श्वगृहे एव आसम्। एतेन दीयमानां नरकयातनां सम्यक् अनुभूतवान्। एतस्य कारणतः एव अहं तत् गृहं त्यक्त्वा कुत्रापि अटन् मार्गे मृतः। ये प्रातिवेशिकेभ्यः कष्टं यच्छन्ति ते पिशाचानाम् अपेक्षया अतीव क्रूराः। तादृशः रङ्गराजः अत्र आगतः अस्ति। शीघ्रम् एव तस्य स्वभावं ज्ञातुं शक्नुवन्ति भवन्तः'' इति।

अपरक्षणे एव गृहस्य मध्ये एकः चक्रवातः उत्पन्नः। तस्य वेगेन मान्त्रिकस्य पुरतः विद्यमानानि पूजावस्तूनि सर्वाणि अपि गृहे अस्तव्यस्तानि जातानि। मान्त्रिकः भीत्या कम्पमानः उच्चस्वरेण मन्त्रोच्चारणम् आरब्धवान्।

तदा एव चक्रवातः वातायनम् अतिक्रम्य बहिः धावितः।

तत्र सम्मिलिताः सर्वेऽपि रङ्गराजं सन्देहपूर्वकं पश्यन्तः सम्भाषणम् आरब्धवन्तः।

एतत् दृष्ट्वा रङ्गराजः उक्तवान्– ''पिशाचस्य वचनानुसारम् सः रङ्गराजः अहम् एव इति मन्ये। एषः कश्चित् गृहनाशकः पिशाचः। एतेषु दिनेषु मानवेषु एव प्रामाणिकता न्यूना दृश्यते। एवं सति पिशाचानां प्रामाणिकतां विश्वसितुम् एव न शक्यते। कलहप्रियाः एव एवं पिशाचाः भवन्ति'' इति।

''एतत् सत्यम् अपि स्यात्। मान्त्रिकस्य हस्ततः विमोचनं प्राप्तुं पिशाचः किमपि असत्यम् उक्तवान् स्यात्। पिशाचानां किं भोः, असत्यकथनात् तेषां भीतिः एव नास्ति। असत्यकथनात् पापं, पापतः दुर्गतिः च। पिशाचजन्मापेक्षया अधोगतिः का अन्या अस्ति'' इति उक्तवान् कश्चित्।

एवं रङ्गराजः तत्क्षणे जनापवादतः रक्षितः अभवत्। किन्तु अन्तरङ्गं तु वदति स्म– 'भवान् एतावत्पर्यन्तं यत् कृतवान् तत् असमीचीनम्' इति।

जनाः सर्वे स्व-स्वगृहं गतवन्तः। रङ्गराजः अवमानेन शिरः अवनमय्य ततः निर्गतवान्। अनन्तरकाले सः प्रातिवेशिकेभ्यः साहाय्यं कुर्वन्, स्वयम् अपि उत्तमः प्रातिवेशिकः सञ्जातः।






## ७

(उग्राक्षस्य वशे आगतः अमरपालः चित्रसेनाय ज्वालाद्वीपवासिनां विषये कांश्चन रहस्यविषयान् उक्तवान्। राजद्रोहिणः नागवर्मणः विषये अपि केचनः रहस्यांशाः ज्ञाताः। 'राजद्रोहिणः साहाय्यकान् व्याघ्रचर्मधारिणः, सर्वान् भयङ्करपक्षिणः च अग्निना ज्वालयामि' इति उक्तवान् अमरपालः। तदनन्तरम् .....)

अमरपालस्य वचनानि चित्रसेनः सश्रद्धं श्रुतवान् आसीत्। 'भवान् अपि सर्वं श्रुतवान्, ज्ञातवान् च किल' इति प्रश्नभावं प्रकाशयन् सः उग्राक्षं दृष्टवान्। अमरपालस्य वचनानां प्रामाणिकताविषये उग्राक्षस्य अपि कोऽपि सन्देहः नास्ति। अतः सः तृप्त्या शिरः चालितवान्।

उत्साहेन उत्थाय च– "अस्तु तावत्, भवता सह मम अनुचरेषु राक्षसेषु द्वित्रान् प्रेषयामि। यदि कार्यं सफलं भवेत् तर्हि भवन्तं विशेषरीत्या सम्मानयिष्यामि च" इति अमरपालम् उक्तवान् सः।

चित्रसेनः किञ्चित्कालम् आलोच्य– "एतस्य कार्यस्य साधनेन सह कपिलपुरम् अपि वशीकुर्मः चेत् उत्तमं किल? कपिलपुरराजं कारागारे स्थापयित्वा वराकः नागवर्मा मम पितुः राज्यस्य धवलगिरेः उपरि अपि आक्रमणं कृतवान्। इदानीं तु



कपिलपुरस्य रक्षणार्थं महासैन्यं किमपि न स्यात्। अतः वयं अकस्मात् आक्रमणं कृत्वा पराक्रमं किञ्चित् प्रदर्शयामः चेत् कपिलपुरस्य दुर्गं, विना श्रमं अस्माकं वशे आगच्छेत् एव इति मम भाति" इति उक्तवान्।

"सत्यम्! युक्तः उपायः एषः" इति सन्तोषेण उद्गारं प्रकटयन् हसन् उक्तवान् उग्राक्षः– "चित्रसेन! सुयोग्यम् उपायं सूचितवान् भवान्। अस्माभिः न केवलं कपिलपुरं वशीकरणीयम्, अपि तु वीरसिंहस्य कुमारी कान्तिमती नागवर्मणः वशे यथा न गच्छेत् तथा अपि प्रयत्नः करणीयः। भवान् तु युवकः अविवाहितः च। एकेन एव प्रयासेन भवतः राज्यं द्विगुणितं विशालं भविष्यति। सुन्दरी राजकुमारी अपि भवतः पत्नी भविष्यति। अतः गच्छाम तावत् इदानीम् एव" इति।

उग्राक्षस्य वचनानि चित्रसेनाय न अरोचन्त। 'कपिलपुरराजस्य वीरसिंहस्य जीवितावधौ एव तदीयराज्यस्य वशीकरणं वा, अनुमतिं विना तदीयपुत्र्याः परिणयः वा उचितं न' इति चिन्तयति सः। उग्राक्षः एतादृशान् सूक्ष्मान् अंशान् न जानाति एव। अन्यच्च कान्तिमती एतावता एव अन्यस्मिन् कस्मिंश्चित् प्रीतिमती स्यात् अपि! उग्राक्षः मानवसम्बद्धान् एतादृशान् सूक्ष्मांशान् यदि न जानाति तर्हि तत्र न आश्चर्यम्। यतः सः जात्या एव राक्षसः।

"उग्राक्ष! महता प्रयत्नेन अपि नागवर्मा जेतव्यः एव। तेन एव वयं भाविकाले निश्चिन्ततया जीवितुं शक्ष्यामः। कपिलपुरस्य सिंहासने पुनः अपि वीरसिंहः एव प्रतिष्ठापनीयः अपि। किन्तु इतःपूर्वं ते भयङ्करपक्षिणः व्याघ्रचर्मधारिणः च नाशनीयाः। यावत् ते अस्माकं राज्यसीमायां तिष्ठन्ति तावत् वयं किमपि साधयितुं न शक्नुमः एव। विपरीततया वयम् एव प्राणापाये पतेम अपि। अतः अस्माभिः कदापि प्रमत्तैः न भवितव्यम्। कल्पनाराज्ये विहारः वा, तज्जनितसन्तोषे लीनता वा इदानीम् अनुचिता एव। वयं तदा एव सन्तोषम् अनुभवेम, यदा च सङ्कल्पितं सर्वं सिद्धं भविष्यति" इति विवेकपूर्वकम्

उक्तवान् चित्रसेनः।

"कार्यसाधनं तु मम उत्तरदायित्वम्। भवन्तः सैन्येन सह निलीनाः तिष्ठन्तु। यदा वयं गोष्ठं ज्वालयित्वा भयङ्करपक्षिणः नाशयेम तदा भवन्तः अकस्मात् कपिलपुरस्य उपरि आक्रमणं कुर्वन्तु। अनन्तरकार्यसिद्धिविषये भवतां संशयः एव मास्तु" इति आत्मविश्वासेन उक्तवान् अमरपालः।

एतत् वचनं उग्राक्षः चित्रसेनः च अङ्गीकृतवन्तौ। तौ अमरपालेन सह राक्षसद्वयं, चत्वारः चित्रसेनसैनिकान् च प्रेषितवन्तौ। अमरपालः तैः सह त्वरया ततः निर्गतवान्।



चित्रसेनः उग्राक्षः च स्वसैनिकान् एकत्रीभवनार्थम् आदिष्टवन्तौ। एताम् आज्ञां श्रुतवत्सु सैनिकेषु तदा विशेषोत्साहः उत्पन्नः।

अमरपालः तु राक्षसैः सैनिकैः च सह प्रस्थितवान् किल? सः मध्याह्नसमये कपिलपुरसमीपस्थम् अरण्यं प्राप्तवान्।

तस्मिन् एव अरण्ये शताधिकाः भयङ्करपक्षिणः गोष्ठे निबद्धाः आसन्। तेषां रक्षकाः गोष्ठं परितः लघुकुटीरेषु निवसन्ति स्म।

अमरपालः स्वसहचरान् समीपम् आहूय रक्षकभटानां कुटीरान् प्रदर्शयन् उक्तवान्—"अहम् एतं प्रदेशं सम्यक् जानामि। अत्रस्थः एकैकः रक्षकभटः अपि मम परिचितः एव। अहं प्रथमम् उपायेन तान् एकत्रीकृत्य संज्ञया भवतः सूचयामि। भवन्तः अकस्मात् आक्रमणं कृत्वा निर्दाक्षिण्यं तान् मारयन्तु। अनन्तरं भयङ्करपक्षिणां वसतिम् अग्निना ज्वालयिष्यामः" इति।

सर्वे एतत् अङ्गीकृतवन्तः। अमरपालः विकृतं ध्वनिम् उत्पादयन् रक्षकभटानां वसतिं प्रति धावितवान्।

अकस्मात् उत्पन्नेन उच्चध्वनिना सर्वे झटिति कुटीरतः बहिः आगतवन्तः। कष्टेन श्वासोच्छ्वासं कुर्वन्तम् अमरपालं परितः स्थित्वा "किं, किम्?" इति पृष्टवन्तः। अमरपालः आयासम् अभिनयन् क्षणकालं



"पक्षिणः वयं च कुशलिनः एव। नागवर्ममहाराजः धवलगिरेः उपरि आक्रमणं कृतवान् अस्ति। अतः कपिलपुरस्य रक्षकाः अपि वयम् एव। दुर्गे नाममात्रेण केचन सैनिकाः सन्ति। तेषाम् अपि आद्यं कर्तव्यं राजकुमार्याः कान्तिमत्याः रक्षणं, न तु दुर्गपरिपालनम्। नागवर्मा तु धवलगिरिं जित्वा, अरण्ये स्थितं चित्रसेनस्य दुर्गम् अपि जित्वा विजययात्रां समाप्य अत्र आगमिष्यति। अनन्तरम् अस्मासु एकैकः अपि उच्चाधिकारं प्राप्स्यति" इति उत्साहेन उक्तवन्तः ते रक्षकभटाः।

तेषां वचनं श्रुत्वा अत्यानन्दम् अनुभवन् इव अभिनयन् अमरपालः हस्तौ उन्नीय उच्चैः करताडनशब्दं कृतवान्।

तत्क्षणे एव चित्रसेनपक्षीयाः सैनिकाः राक्षसाः च सिंहगर्जनं कुर्वन्तः एतेषां रक्षकभटानाम् उपरि अकस्मात् आक्रमणं कृतवन्तः।

तदा अमरपालः अपि खड्गं हस्तेन गृहीत्वा रक्षकभटानां संहारम् आरब्धवान्। निरायुधाः ते रक्षकभटाः अल्पेन एव प्रयासेन यमपुरीं गताः।

अनन्तरम् अमरपालः स्वयं कुटीरान् प्रविश्य वस्त्राणि तैलेन आर्द्रीकृत्य आनीतवान्। तेषु वस्त्रेषु अग्निस्पर्शनं कृत्वा ते गोष्ठं ज्वालितवन्तः। वायुवेगेन गोष्ठं समग्रम् अग्निना व्याप्तम् अभवत्। परितः ज्वलतः अग्नेः तापः! उपरिष्टात् ज्वलन्तः

मौनं स्थितवान्।

"ओ हो! अमरपालः! भवान् इतोऽपि जीवति वा? राक्षसानां वशे पतितः भवान् मृतः एव स्यात् इति चिन्तितवन्तः आस्म वयम्। कथम् आगतवान्? किं प्रवृत्तम्? कोऽपि भवन्तम् अनुसृत्य आगतवान् वा?" इति कुतूहलेन पृष्टवन्तः ते रक्षकभटाः।

"मरणावस्थां प्राप्तवान् आसम्। किन्तु भूमेः ऋणात् इतोऽपि न उन्मुक्तः इति मन्ये। अतः सजीवम् अत्र आगतवान्। एतावत्पर्यन्तम् आगन्तुं कियत् कष्टम् अनुभूतम् इति तु देवः एव जानाति, न तु अन्ये। भवन्तः कथं सन्ति? सर्वे पक्षिणः गोष्ठे सुरक्षितं सन्ति किल?" इति पृष्टवान् अमरपालः आयासम् अभिनयन्।



अस्ति। अग्निज्वालां दृष्ट्वा प्रायः ते अस्माकं कार्यसिद्धिं ज्ञातवन्तः इति मन्ये। इतःपरं कपिलपुरस्य वशीकरणम् अस्माकं लक्ष्यम्। भवत्सु एकः शीघ्रं गत्वा तान् प्रवृत्तं निवेदयतु। तेन तेषाम् अपि उत्साहः वर्धते'' इति उक्तवान्।

''आवाम् एव गच्छावः'' इति वदन्तौ उभौ राक्षसौ सन्तोषेण गदां चालयन्तौ उत्साहेन उत्प्लुत्य गुल्मादीन् अतिक्रम्य अग्रे गतवन्तौ।

अल्पे एव काले उग्राक्षः चित्रसेनः च ससैन्यं तत्र आगतवन्तौ। अमरपालेन कृतम् अद्भुतकार्यं तेषां पुरतः दृश्यते स्म। सशब्दं ज्वलन् अग्निः इतोऽपि कुत्रचित् सप्रकाशं ज्वलति, पुनः कुत्रचित् धूमायते च।

सर्वेषां दुष्टपक्षिणां मरणं दृष्ट्वा अतीव सन्तुष्टः उग्राक्षः वेगेन अग्रे आगत्य अमरपालम् उन्नीय परितः भ्रामयन्– ''अहो! अपूर्वं कार्यं साधितवान् भवान्। अस्माकं राज्यं निष्कण्टकं जातम्। भवान् यत् इच्छति तत् वदतु। ददामि'' इति उक्तवान्।

तदा आयासेन कष्टम् अनुभवन् अमरपालः– ''भोः राक्षसोत्तम! हृदयस्तम्भनतः पूर्वं मां कृपया अधः अवतारयतु। तावदेव पर्याप्तम्'' इति उक्तवान्।

उग्राक्षः तम् अधः अवतार्य हर्षातिरेकं प्रकटयन्– ''एकोऽपि पक्षी सजीवं यथा न

अङ्गाराः पतन्ति अपि! शृङ्खलया दृढं बद्धाः पक्षिणः ततः पलायनं कर्तुं सर्वथा न शक्तवन्तः। अत्रान्तरे अग्निना ज्वलन्ती छदिः तेषाम् उपरि पतिता। असह्यया वेदनया आक्रन्दनं कुर्वन्तः ते पक्षिणः तत्रैव धराशायिनः जाताः। केचन पक्षिणः महता प्रयत्नेन उड्डयनं कृतवन्तः चेदपि पक्षयोः सामर्थ्याभावतः अग्नौ आहुतिभूताः अभवन्।

अमरपालः तदनुचराः च सन्तोषेण नृत्यं कृतवन्तः। तदा समीपस्थात् पर्वतशिखरतः भेरीध्वनिः श्रुतः।

क्षणकालं सर्वे स्तब्धाः। अमरपालः पर्वतशिखरं पश्यन्– 'अहो! अस्माकं चित्रसेनमहाराजः उग्राक्षेण सह आगच्छन्



अवशिश्येत तथा अपूर्वं साहसं कृतवान् किल भोः! दग्धानां तेषां मांसस्य गन्धः अस्मान् उद्वेजयति" इति वदन् मांसं खादितुम् अनुचरेभ्यः अनुमतिं दत्तवान्। राक्षसाः उत्साहेन तस्मिन् कार्ये प्रवृत्ताः।

"आम्। प्रायः सर्वेऽपि पक्षिणः मृताः। राक्षकभटाः अपि मृताः। पक्षिवाहनाः विंशतिः जनाः अत्र मृताः स्युः। द्वित्राः इतः धावितवन्तः। केचन पुनः कपिलपुरे भवेयुः। तथापि तेभ्यः नूतना काऽपि आपत् न आगच्छेत् इति भाति" इति उक्तवान् अमरपालः।

"इतः पलायिताः, दुर्गे स्थिताः वा कुत्र गच्छेयुः? आक्रमणेन वयं तान् समूलं न नाशयेम वा? दुर्गं भस्मसात्कुर्मः। चित्रसेनेन यथा उक्तं, भवता अपूर्वं कार्यं साधितम्" इति उक्तवान् उग्राक्षः।

"उग्राक्ष! दुर्गावशीकरणे त्वरा प्रमादः वा मास्तु। तथा कुर्मः चेत् कान्तिमत्याः अपायः भवेत्। तत्कार्यम् अहम् एव जागरूकतया निर्वक्ष्यामि" इति उक्तवान् चित्रसेनः।

"सत्यं किल! राजकुमारीविषये अहं न चिन्तितवान् एव। दुर्गं नष्टं न भवेत्। सर्वे शृण्वन्तु। जागरूकाः भवन्तु" इति वदन् उग्राक्षः अनुचराणाम् उपरि आज्ञादृष्टिं प्रसारितवान्।

"यथाज्ञापयति देवः। अप्रमत्ताः तिष्ठामः" इति उक्तवन्तः ते राक्षसाः एकस्वरेण।

अनन्तरं दश आश्विकाः कपिलपुरस्य परिस्थितेः परिशीलनार्थम् अमरपालस्य नायकत्वे प्रेषिताः।

कार्यस्य प्रथमः घट्टः यशस्वितया समाप्तः आसीत्। अतः सर्वे सन्तृप्ताः। इदानीं केचन सैनिकाः तत्रैव पाककार्यम् आरब्धवन्तः।

सूर्यः पश्चिमाकाशं गतः आसीत्। सैनिकाः भोजनं समाप्य वृक्षच्छायायां विश्रान्तिम् अनुभवन्तः आसन्।

तदा कपिलपुरस्य परिस्थितिं ज्ञातुं गतेषु कश्चित् प्रत्यागत्य उक्तवान्– "महाराज! अपायः आगतः। पञ्चाशदधिकाः व्याघ्रचर्मधारिणः राजकुमारीं शिबिकायाम् उपवेश्य दुर्गतः निर्गताः। अरण्ये कुत्रापि

गच्छन्तः सन्ति। तेषां वेगगमनेन वयम् ऊहितुं शक्नुमः यत् ते पलायनं कुर्वन्तः सन्ति इति'' इति।

एतां वार्तां श्रुत्वा चित्रसेनः उग्राक्षः च क्षणकालं स्तब्धौ। ''अत्र कोऽपि अपायः आगतः, भयङ्करपक्षिणः मृताः इति कपिलपुरस्थाः व्याघ्रचर्मधारिणः प्रायः ज्ञातवन्तः। अत्र उत्थितया अग्निज्वालया धूमेन च ज्ञातवन्तः स्युः ते। इतःपरं दुर्गस्य रक्षणम् अशक्यम् इति विचिन्त्य ते राजकुमारीं पर्वते कुत्रापि गोपयितुं रहस्यरूपेण पलायनं कुर्वन्तः सन्ति।''

एवं चिन्तयित्वा चित्रसेनः समर्थान् पञ्चाशत्-सैनिकान्, उग्राक्षं, तदनुचरेषु समर्थान् कांश्चन च आत्मना सह स्वीकृत्य राजकुमार्याः कान्तिमत्याः रक्षणार्थम् अरण्यमार्गम् अनुसृतवान्।

चित्रसेनस्य आज्ञानुसारम् अवशिष्टाः सैनिकाः अमरपालस्य नायकत्वे कपिलपुरदुर्गं वशीकर्तुं प्रस्थितवन्तः।

सः आशिवकः कान्तिमत्याः शिबिका यस्यां दिशि गता तां दिशं सम्यक् प्रदर्शितवान्। अतः चित्रसेनः अनुचरैः सह व्याघ्रचर्मधारिणां समीपं गतवान्।

आशिवकेन यथा उक्तम् आसीत्, चत्वारः शिबिकाम् उन्नीय वेगेन धावन्तः आसन्। इतरे व्याघ्रचर्मधारिणः शिबिकायाः पुरतः पृष्ठतः च गच्छन्तः रक्षणकार्ये निरताः आसन्।

समीपम् आगतं चित्रसेनपरिवारं ते व्याघ्रचर्मधारिणः अपि दृष्टवन्तः। तेषां नायकः भीकरं गर्जनं कुर्वन् अनुचरान् आज्ञापितवान्– ''शिबिकाम् अवतारयन्तु'' इति।

तथैव उच्चैः उक्तवान् च– ''सर्वे जागरूकाः भवन्तु। अस्माकं शरीरे प्राणाः यावत् तिष्ठन्ति तावत् कान्तिमती शत्रुवशा न भवेत्। अस्मासु अन्तिमः अपि यदा मरणावस्थां प्राप्नोति तदा सः तां मारयित्वा एव मरणं प्राप्नुयात्। एषा नागवर्ममहाराजस्य आज्ञा'' इति।

(अनुवर्तते)





# महासाहसवीरः

कथानां मञ्जूषासदृशस्य वेतालस्य कुञ्चिकासदृशः राजा त्रिविक्रमः पुनः वृक्षस्य समीपं गत्वा, शाखायां लम्बमानं शवम् अवतार्य श्मशानं प्रति गन्तुम् आरब्धवान्। तदा शवान्तर्गतः वेतालः एवम् उक्तवान्— "भो राजन्, एतस्मिन् जीर्णीभूते श्मशानस्थाने भीरुजनानां हृदयानि कम्पनं प्राप्नुवन्ति। एतादृश-भयङ्करसमये एतत् दुःसाध्यकार्यं कर्तुं भवन्तं ये प्रेरितवन्तः, ते नूनं भवदपेक्षया बलिष्ठाः बुद्धिमन्तः च स्युः इति मम विश्वासः। लोके केचन मानवाः स्वापेक्षया न्यूनस्तरीयान् जनान् मधुमन्त्र्या भ्रामयित्वा, परोक्षे तेषाम् उपहासं कुर्वन्तः हसन्ति। एतादृशकार्येण ते विलक्षणतृप्तिं प्राप्नुवन्ति। न केवलं मानवेषु, अपि तु देवतासु, राक्षसेषु अपि एतादृशाः भवन्ति। एतस्य उदाहरणरूपेण कस्यचित् राक्षसस्य कथाम् इदानीं कथयामि। कथां शृण्वन् गच्छतु। मदीयभारं वहतः भवतः मार्गायासः

## वेतालकथा



न्यून: भवति'' इति उक्त्वा कथाम् आरब्धवान्–

पूर्वं कदाचित् चतुरसेननामक: महाराज: प्रपञ्चे वर्तमानान् सर्वान् देशान् जित्वा एकचक्राधिपत्यं संस्थाप्य, महासार्वभौम: इति प्रसिद्ध: अभवत्। स: प्रजारञ्जक: इति कीर्तिम् अपि लब्धवान्। सर्वेषाम् अपि तस्मिन् महान् अभिमान: आसीत्। प्रपञ्चे कुत्रापि युद्धभयं न आसीत्। एतस्य चतुरसेनस्य राजधान्या: नाम रङ्गनगरम् इति।

कुत्रापि युद्धभयस्य अभावात् सर्वे उत्साहिन: युवका: ललितकलासु आसक्ता:, अथवा वाणिज्यादिव्यवहारेषु व्यापृता: आसन्। एतां वार्तां चतुरसेनचक्रवर्ती ज्ञातवान्। देशे विद्यमाना: युवका: युद्धसम्बन्धि-व्यायामादिकं परित्यजन्ति चेत्, देशस्य अपाय: भवेत् इति स: चिन्तितवान्। अत: स: एकस्मिन् वर्षे राजधान्यां शस्त्रास्त्रविद्यानां स्पर्धाम् एकाम् आयोजितवान्।

स्पर्धाया: आरम्भार्थं दिनद्वयम् अवशिष्टम् आसीत्। तदा तालवृक्षप्रमाणक: दीर्घदेही कश्चन राक्षस: रङ्गनगरं प्रविष्टवान्। तं दृष्ट्वा भीता: सर्वे अस्तव्यस्ता: इतस्तत: धावितवन्त:।

किन्तु स: राक्षस: कस्य अपि कामपि हानिम् अकुर्वन् नगरस्य मध्यभागे स्थित्वा, एकवारं कर्णकठोरम् आक्रोशं कृत्वा, महाराजम् आकारितवान्।

महाराजं दृष्ट्वा स: राक्षस:– ''पश्यतु रे राजन्! इदानीम् अहम् इच्छामि चेत् एतत् महानगरम् एकस्मिन् एव क्षणे समूलं नाशयितुं शक्नोमि। किन्तु तथा कर्तुं मम इच्छा नास्ति। अत: शृणोतु। अहं प्रतिदिनम् एतस्मिन् एव समये अत्र आगच्छामि। पुष्टौ आरोग्यवन्तौ च द्वौ पुरुषौ मह्यम् अर्पयतु। ताभ्यां मम बुभुक्षां शमयित्वा तृप्त: भविष्यामि। भवन्त: अपि रक्षिता: भविष्यन्ति'' इति गर्जितवान्।

गत्यन्तराभावात् चतुरसेनमहाराज: झटिति स्वीयम् अङ्गीकारं सूचितवान्।

तस्मिन् दिने स: राक्षस: स्वेच्छया द्वौ महाकायौ पुरुषौ गृहीतवान्, नगरत: निर्गत्य बहि: गतवान् च।



राक्षसस्य निर्गमनसमनन्तरम् एव चतुरसेनः सर्वान् स्वीयसचिवान् समाहूतवान्। सर्वे सम्भूय एतस्य राक्षसस्य पीडापरिहारार्थं किं करणीयम् इति चर्चितुम् आरब्धवन्तः। अन्ते ते एकं निर्णयं कृतवन्तः। तदनुसारेण देशे सर्वत्र एवंरीत्या सडिण्डिमसंघोषः कृतः यत् इतः पूर्वम् आयोजिता युद्धसम्बन्धिनी स्पर्धा न प्रचलति। किन्तु तत्स्थाने नूतनतया आगतं राक्षसं यः हनिष्यति, तस्य वीरस्य सम्माननं चक्रवर्ती करिष्यति इति।

एतत् उद्घोषणं श्रुत्वा स्पर्धार्थम् आगत्य शिबिरेषु स्थितेषु केचन युवकाः महाराजस्य समीपम् आगत्य "प्रभो, एषः राक्षसः अपरिमितशक्तिमान् अस्ति। न्यग्रोधवृक्षम् अपि एषः समूलम् उत्पाट्य दूरं क्षेप्तुं समर्थः। नद्याः समस्तं जलं युगपत् एव पातुं शक्नोति। एतादृशं तम् अभिमुखीकर्तुं वीराणां मानवानां प्रेषणेन किमपि प्रयोजनं नास्ति। तेन सः बहु उग्रः भविष्यति, तथा महान् अनर्थः अपि सम्भवेत्" इति उक्तवन्तः।

"अहं तूष्णीम् उपविश्य कथं वा मम प्रजाः तस्मै राक्षसाय आहारार्थं दद्याम्?" इति उक्तवान् चतुरसेनः खिन्नभावेन।

"प्रभो, एषः नित्यसञ्चारी राक्षसः। अतः एषः अत्रापि बहुकालं यावत् नैव तिष्ठति। अतः भवतः राजधान्याम् अपि एतस्य पीडा अल्पकालिकी एव। लक्षाधिकप्रजानां संरक्षणार्थं, नगरस्य नाशं वारयितुं च, किञ्चित्कालं यावत् शतद्विशतप्रजानां प्राणाः आहुतीक्रियन्ते चेत् अपि महती हानिः न इत्येव मन्तव्यम्। अस्माकं देशानां पालकाः तथैव कृतवन्तः" इति उक्तवन्तः भिन्नभिन्नदेशेभ्यः आगताः ते युवकाः।

चतुरसेनः खिन्नवदनः भूत्वा, सर्वान् तान् युवकान् प्रेषयित्वा, स्वयं तीव्रालोचनपरः अभवत्।

परेद्युः पुनः सः राक्षसः तस्मिन् एव निश्चिते समये रङ्गनगरम् आगत्य, तत्र स्थितौ द्वौ बलशालिनौ उत्क्षिप्य किमपि उपद्रवम् अकुर्वन् तूष्णीं गतवान्।

"चक्रवर्तिना मया एतादृशी असहायकता कथं सोढव्या" इति चिन्तयन् महाराजः



अत्यन्तदुःखितः अभवत्। सः पुनः एकवारं सर्वान् सचिवान् समावेश्य "एवंरीत्या मम प्रजाः तस्मै राक्षसाय अर्पयितुम् अहं न शक्नोमि। एतदर्थं भवद्भिः यः कोऽपि परिहारमार्गः अवश्यं वक्तव्यः। नो चेत् अहम् एव तं सम्मुखीकरोमि। यदा सः प्रजाः उत्क्षिप्य गच्छति, तदा भीरुवत् तूष्णीं स्थित्वा तस्य दर्शनम् अनुचितम्। तत्रापि क्षत्रियवीरः, महाचक्रवर्ती च भूत्वा अहं सर्वथा तथा स्थातुं न शक्नोमि" इति उक्तवान्।

चतुरसेनः राक्षसेन सह योद्धुं गच्छति चेत्, तत् तु साक्षात् आत्महत्यासमानम् एव इति सचिवाः चिन्तितवन्तः। ते सर्वे सम्यक् समालोच्य महामान्त्रिकं साम्बकम् आनायितवन्तः।

साम्बकः अञ्जनद्वारा समीक्षणं कृत्वा किम् इदम् अद्भुतम्! एतस्य राक्षसस्य शक्तिः ऊहयितुम् अपि अशक्या अस्ति। अहम् अत्रैव स्थित्वा, मम मन्त्रशक्तिद्वारा तं नाशयितुं प्रयत्नं करोमि। अदृष्टं समीचीनम् अस्ति चेत् सः नश्यति। नो चेत् मम प्राणाः गच्छेयुः" इति उक्तवान् सचिवानां पुरतः।

स्वीयजीवनस्य आशाम् अपि त्यक्त्वा साम्बकः एतस्मिन् कार्ये प्रवृत्तः अस्ति इति सचिवाः ज्ञातवन्तः। अतः तस्य त्यागभावनां ते श्लाघयित्वा, तेन अपेक्षितानि सर्वाणि आनुकूल्यानि प्रकल्पितवन्तः।

तस्याम् एव रात्रौ साम्बकः तस्य राक्षसस्य उपरि स्वीयां मन्त्रशक्तिं प्रयोक्तुम् इच्छन्, पूजामन्दिरं शुद्धीकृतवान्।

अनन्तरं पद्मचित्रसहितां रङ्गवल्लीं विलिख्य तस्याः मध्ये शक्तिविग्रहं प्रतिष्ठापितवान्। तस्य पुरतः स्वयं पद्मासनस्थः भूत्वा उपविश्य मन्त्रोच्चारणं कर्तुम् आरब्धवान्। पूजायाः समाप्तिसमये सः सम्पूर्णरूपेण स्वेदक्लिन्नः अभवत्।

अपरेद्युः राक्षसः यथापूर्वम् अन्यौ द्वौ बलशालिनौ गृहीत्वा तूष्णीं निर्गतवान्। तस्य उपरि मान्त्रिकस्य मन्त्रपरिणामः कोऽपि न दृष्टः। मान्त्रिकः अवनतमुखः भूत्वा निर्गतवान्। चतुरसेनः तु किङ्कर्तव्यतामूढः अभवत्।

सर्वे सचिवाः मिलित्वा पुनः चर्चाम्

आरब्धवन्तः। इदानीं ते अपरधन्वन्तरिः इति प्रख्यातं राजवैद्यम् आनाय्य "भोः वैद्यमहाशय, भवान् यथा प्राणरक्षकानि औषधानि जानाति, तथा प्राणहननसमर्थानि विषाणि अपि जानाति खलु? विषप्रयोगं कृत्वा राक्षसं मारयितुं भवान् शक्नोति वा?" इति पृष्टवन्तः।

"महान्तं बलशालिनम् अपि क्षणमात्रे एव मारयितुं समर्थं कालकूटविषम् अहं जानामि" इति उक्तवान् राजवैद्यः।

"तेन विषेण राक्षसः म्रियते वा?" इति पृष्टवन्तः सचिवाः।

राजवैद्यः स्मयमानः "एतेन विषेण सः न म्रियेत चेत्, अन्यत् किमपि विषं तं हन्तुं समर्थं न भवति" इति उक्तवान्।

तस्यां रात्रौ राजवैद्यः कालकूटविषं सज्जीकृत्य सचिवानां हस्ते दत्तवान्। ते सचिवाः परेद्युः राक्षसस्य आहारभूतयोः बलशालिनोः हस्तेषु तत् विषं निक्षिप्य "भवतोः मुष्टिषु एव एतत् विषं स्थापनीयम्। भवद्भ्यां सह एव एतत् अपि राक्षसस्य शरीरं गच्छतु। यद्यपि भवन्तौ मरणं प्राप्नुतः, तथापि राक्षसहननस्य महती कीर्तिः भवतोः एव भवति। सूर्यचन्द्रौ यावत् तिष्ठतः, तावत् प्रजाः भवन्तौ न विस्मरन्ति" इति उक्तवन्तः। तयोः अपि स्वीकारं विना अन्यथा गतिः न आसीत्।

परस्मिन् दिने यथावत् राक्षसः आगतवान् अग्रे स्थितौ बलशालिनौ गृहीत्वा निर्गतवान् च।

भक्षणसमये तयोः मुष्टिषु स्थितं





कालकूटविषम् अपि राक्षसस्य उदरं प्राविशत्।

किन्तु तेन विषेण तस्य कार्यहानिः न अभवत्। तस्य जीर्णशक्तिः अद्भुता आसीत्। तदनन्तरदिने अपि सः राक्षसः यथावत् पुनः आगत्य, अपरौ द्वौ नीत्वा भक्षितवान्। "अये, एषः कीदृशः राक्षसः स्यात्?" इति सर्वे आश्चर्यचकिताः अभवन्।

एतत् सर्वं दृष्ट्वा चतुरसेनः स्वीयसचिवान्, बान्धवान्, पत्नीं, पुत्रान् च एकत्र मेलयित्वा, तान् सर्वान् एकवारं दृष्ट्वा "प्रपञ्चस्य सर्वान् देशान् अपि जित्वा अहं चक्रवर्ती अभवम्। एतावत्पर्यन्तं कस्यापि पुरतः शिरः न अवनमितवान्। इदानीम् एकः राक्षसः माम् असहायकं कृत्वा मम प्रजाः भक्षयित्वा गच्छति। सः स्वेच्छया तथा कुर्वन् अस्ति। तादृशं तं तूष्णीं पश्यतः मम सिंहासनस्य उपरि उपवेशनस्य योग्यता नास्ति। श्वः अहम् एव गत्वा तस्य बलपरीक्षां करिष्यामि। अथवा अहम् एव तस्य आहारः भविष्यामि। इतः परं तूष्णीं स्थातुं न शक्यते। भवन्तः किमपि न वदन्तु। जातस्य मरणं ध्रुवं खलु?" इति उक्तवान्।

एतत् कार्यं तु साक्षात् मरणस्य आह्वानम् इव भवति इति सर्वे महाराजं समाधातुं प्रयतितवन्तः। किन्तु किमपि प्रयोजनं न अभवत्।

"एतं राक्षसं हत्वा एव अहं चक्रवर्ती भवितुम् अर्हः भवामि। मां सः हन्ति चेत्, प्रजानां मम दौर्भाग्यस्य साक्षाद्दर्शनस्य पीडा परं मत्कृते परिहृता भवति" इति उक्तवान् चतुरसेनः।

परेद्युः राक्षसस्य आगमनसमनन्तरम् एव चतुरसेनः तस्य पुरतः गत्वा "भोः राक्षस! अहम् एतत् सम्पूर्णं भूमण्डलं जित्वा चक्रवर्ती इति ख्यातः चतुरसेनमहाराजः। इदानीं भवान् मदुपरि एव शासनं कुर्वन् अस्ति। इदानीम् अहं भवता सह युद्धं कर्तुम् आगतवान् अस्मि। यदि अहं जेष्यामि, तर्हि मम प्रजाः भवतः पीडातः मुक्ताः भवन्ति। यदि भवान् जेष्यति, तर्हि एतस्य राज्यस्य सम्पूर्णः अधिकारः भवदधीनः भविष्यति। वीरेण युद्धम् अवश्यं करणीयम्। जयापजयौ तु दैवाधीनौ" इति उक्त्वा

चतुरसेनः राक्षसस्य हस्तस्य उपरि महान्तं प्रहारं कृतवान्।

तेन प्रहारेण राक्षसस्य हस्ते कण्टक-वेधनेन यथा भवति तथा अल्पम् क्षतम् अभवत्। किञ्चित् रक्तस्रावः अभवत् च। राक्षसः तत् किमपि अगणयन् महाराजस्य हस्तात् खड्गम् आकृष्य दूरं क्षिप्त्वा "भोः चक्रवर्तिन्! भवतः साहसेन अतीव सन्तुष्टः अस्मि। एतस्मिन् भूमण्डले भवत्सदृशः वीरः अन्यः कोऽपि नास्ति इति सिद्धम् अभवत्। भवतः दर्शनेन मम महान् सन्तोषः जातः। मम आगमनोद्देशः भवता पूरितः। इदानीम् अहम् एतत् भूमण्डलं त्यक्त्वा निर्गच्छामि" इति उक्तवान्।

तस्य वचनं श्रुत्वा चतुरसेनः आश्चर्यम् अनुभवन् "तर्हि वस्तुतः भवान् कः अस्ति भोः? किमर्थम् अस्माकं देशम् आगतवान्? इदानीं किमर्थं प्रतिगच्छति?" इति पृष्टवान्।

तदा राक्षसः– "अहं पाताललोकीयः। अहं तत्र सर्वासु विद्यासु पारङ्गतः अस्मि। मम देशे माम् पराजेतुं समर्थः कोऽपि नास्ति। मम पराक्रमेण सन्तुष्टः पातालराजः मां पाताललोकस्य सैन्याधिपतिं कर्तुम् अपेक्षितवान्। अहं तु "पराक्रमेण माम् अतिरिच्य यः तिष्ठति, तादृशवीरं यावत् न पश्यामि, तावत् अहं कुत्रापि एकत्र स्थिरतया न स्थास्यामि" इति पातालराजम् निवेदितवान्। तदा सः मां "भवान् भूलोकसञ्चारं करोति चेत्, भवतः इच्छापूर्तिः भवेत्" इति उक्तवान्। अत एव भूलोकं प्रति आगतवान्। अत्र अनेकेषु देशेषु



सञ्चारं कृतवान्। किन्तु मां सम्मुखीकर्तुं समर्थः वीरः कोऽपि न दृष्टः। बहुकालानन्तरं तादृशः महावीरः भवान् इदानीं दृष्टः। मम इच्छा सफला अभवत्। अहम् इदानीं पाताललोकं प्रति गच्छामि" इति उक्त्वा शीघ्रं शीघ्रं ततः निर्गतवान्।

इत्थं वेतालः कथां समाप्य "हे राजन्, खड्गं गृहीत्वा योद्धुम् आगतं चतुरसेनं राक्षसः निरायासम् उत्क्षिप्य स्वीयहस्ते स्थापयितुं समर्थः अस्ति। चतुरसेनस्य खड्गप्रहारेण तस्य कण्टकवेधनसदृशी पीडा अपि न अभवत्। एवं सत्यपि राक्षसः चतुरसेनं "मदपेक्षया भवान् अधिकवीरः" इति श्लाघितवान् खलु? एषा तु मुखस्तुतिः एव खलु? एतादृशी मुखस्तुतिः निन्दासमाना किल? एतस्य प्रश्नस्य उत्तरं जानन् अपि न वदति चेत्, भवतः शिरः शतधा छिन्नं भविष्यति" इति उक्त्वा तूष्णीम् अभवत्।

तदा त्रिविक्रमः एवंरीत्या उत्तरम् उक्तवान्—

"पाताललोकस्य राजा तस्मै राक्षसाय सैन्याधिपतिपदवीं दातुं सिद्धः अस्ति। एतेन ज्ञायते यत् सः राजा राक्षसापेक्षया अधिकबलवान् वीरः च इति। नो चेत् तम् एव पराजित्य राक्षसः पातालस्य अधिपतिः अभविष्यत्। एवं च स्वापेक्षया महावीरं सम्मुखीकर्तुं राक्षसः असमर्थः इति सिद्धम्। चतुरसेनः न तथा। सर्वरीत्या राक्षसः स्वापेक्षया बलिष्ठः इति जानन् अपि तं सम्मुखीकर्तुं सिद्धः भूत्वा स्थितः अस्ति। एतदेव वस्तुतः, वीरस्य लक्षणम्। स्वीयशक्तिम् अनतिक्रम्य यः युद्धं करोति, सः सामान्यवीरः। स्वीयशक्तिम् अतिक्रम्य यः युध्यते सः महासाहसवीरः। एतत् ज्ञात्वा राक्षसः 'चतुरसेनः एव वीरतरः' इति निर्णीतवान्। अतः एव सः चतुरसेनम् अभिनन्द्य पातालं प्रतिगतवान्। तस्य वचनेषु मुखस्तुतिः वा निन्दा वा किञ्चिदपि नास्ति" इति।

एवंरीत्या यदा महाराजस्य मौनभङ्गः अभवत् तदा शवसहितः वेतालः अदृश्यः भूत्वा, यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।






अस्माकं देवालयाः

# चामुण्डेश्वरी

कस्मिंश्चित् काले भयानकः महिषासुरः नाम राक्षसः उद्भूतवान्। सः क्रमशः त्रीन् लोकान् अपि जितवान्।

देवाः तेन सह बहुवारं युद्धं कृतवन्तः। किन्तु सर्वदा अपि महिषासुरः एव जयं प्राप्नोति स्म। तस्य दारुणकृत्यैः भीतः भूलोकः कम्पते स्म। दिने दिने महिषासुरस्य गर्वः वर्धते स्म।





एषा राक्षसपीडा परिहरणीया इति देवाः विष्णुं प्रार्थितवन्तः। एतदर्थम् कश्चन यज्ञः करणीयः इति विष्णुः तान् सूचितवान्। तदनुसारं देवाः यज्ञकुण्डं निर्माय तं परितः उपविश्य प्रार्थनां कृतवन्तः। प्रार्थनायाः फलरूपेण यज्ञकुण्डतः दुर्गादेवी प्रत्यक्षम् अभवत्।



शिवः स्वकीयं त्रिशूलं दुर्गादेव्यै दत्तवान्। इन्द्रः वज्रायुधं दत्तवान्। एवमेव अनेकेभ्यः विविधैः आयुधैः शक्तिभिः च अनुगृहीता सा दुर्गादेवी सिंहम् आरुह्य विन्ध्यपर्वतं प्रति प्रस्थितवती।

महिषासुरः दुर्गादेव्याः गाम्भीर्ययुक्तं सौन्दर्यवर्णनं श्रुतवान्। तां दूरतः एव दृष्ट्वा, तस्याः दिव्यसौन्दर्येण मोहितः। 'सा परिणेतव्या' इति इच्छया सः विवाहविषयकं सन्देशं तस्यै प्रेषितवान्। किन्तु दुर्गादेवी एतत् निराकृतवती। एतेन, महिषासुरः कुपितः।





सा गृहीत्वा आनेतव्या इति विचिन्त्य महिषासुरस्य अनुचराः ताम् अनुसृतवन्तः। तस्याः ताडनेन ते सर्वे हताशाः सञ्जाताः। अन्ते महिषासुरः एव प्रस्थितः। तदा सा लोकपीडकं तं महिषासुरं संहृतवती। एतेन लोककल्याणम् अभवत्।

महिषासुरस्य संहारानन्तरं दुर्गादेवी कस्मिंश्चित् सुन्दरपर्वते विश्रान्तिं स्वीकृतवती। एतेन सः पर्वतः पवित्रः इति सुविख्यातः अभवत्।





मैसूरुनगरतः त्रयोदशकिलोमीटर् दूरे स्थितः चामुण्डीपर्वतः अतीव प्रसिद्धः अस्ति। अस्मिन् पर्वते एव लोकमातुः दुर्गादेव्याः चामुण्डेश्वर्याः आलयः विराजते।

एतत् दिव्यक्षेत्रं समुद्रतलतः ३,४८९ पादपरिमितम् उन्नतम् अस्ति। तत्र गन्तुं सहस्रं सोपानानि आरोहणीयानि। चामुण्डीपर्वते एव महाबलेश्वरस्य (शिवस्य) आलयः अपि अस्ति।





पर्वतशिखरं प्रति गमनार्थं निर्मिते मार्गे कश्चन महानन्दि-विग्रहः अस्ति। एषः विग्रहः एकया एव अखण्डशिलया निर्मितः। नन्दिविग्रहस्य कण्ठं परितः उत्कीर्णाः घण्टाः लोहमय्यः घण्टाः इव दृश्यन्ते।

आलयस्य अन्तः देवी स्वर्णमये सिंहासने उपविष्टवती अस्ति। आलयपरिसरः तु सस्यश्यामलः नयनमनोहरः च। दर्शकानां नेत्रोत्सवं जनयति च।





पूर्वं तु एतत् पर्वतशिखरं गन्तुम् उत्तमः मार्गः न आसीत्। तथापि भक्ताः सहस्रसङ्ख्यया देवीदर्शनार्थम् आगच्छन्ति स्म एव। इदानीं योग्यः मार्गः निर्मितः अस्ति। प्रतिवर्षं प्रवर्तमाने नवरात्रोत्सवे देशस्य सर्वेभ्यः प्रान्तेभ्यः असङ्ख्याः जनाः आगच्छन्ति।



# पुरुषव्याघ्रः

पूर्वं चीनादेशे निर्गतिकः कश्चन युवकः आसीत्। मातरं विना तस्य अन्ये बान्धवाः न आसन्। सः प्रतिदिनं पर्वतप्रदेशं गत्वा काष्ठानि सङ्गृहणाति, तानि विक्रीय प्राप्तेन धनेन जीवति च।

शीतकालस्य कस्मिंश्चित् सायङ्काले सः पर्वतप्रदेशे काष्ठानि सङ्गृह्णन् आसीत्। तस्मिन् समये समीपे विद्यमानात् वेणु-समूहात् करुणापूर्णः सङ्कटयुक्तः कश्चन स्वरः श्रुतः। सान्द्ररूपेण वेणुसमूहः आसीत् इत्यतः समूहस्य अन्तः किम् अस्ति इति न दृश्यते स्म।

युवकः परशुं स्कन्धे संस्थाप्य वेणु-समूहस्य समीपं गतवान्। तदा सङ्कटयुक्तः ध्वनिः पूर्वापेक्षया उच्चैः श्रूयते स्म। अन्तः कः अस्ति, तस्य परिस्थितिः कीदृशी अस्ति इति किमपि न ज्ञातम्। सः बहु जागरूकतया मार्गं स्वच्छीकुर्वन् वेणुसमूहस्य अन्तः प्रविष्टवान्।

पूर्वं ये वेणवः कर्तिताः आसन् तेषां तीक्ष्णानि मूलानि वेणुसमूहस्य मध्ये मध्ये आसन्। तानि तावत् तीक्ष्णानि आसन् यत् अजागरूकतया तेषाम् उपरि पादः स्थापितः चेत् पादः व्रणितः इत्येव।

वेणुसमूहस्य अन्तः करुणक्रन्दनं निरन्तरं श्रूयते स्म। करुणक्रन्दनं यः करोति सः मानवः उत मृगविशेषः इत्यपि न ज्ञायते स्म।

युवकः धैर्येण अग्रे गतवान्। वेणूनां मध्ये काचित् व्याघ्री तेन दृष्टा। तस्याः पादे कण्टकसदृशं वेणुमूलं लग्नम् आसीत्। एतेन इतस्ततः स्पन्दितुम् अपि अशक्ता सा वेदनया क्रन्दति स्म।

युवकः झटिति वेणुसमूहतः बहिः आगत्य पर्वतम् अवतीर्य गृहं गतवान्। "अम्ब! पर्वतस्य उपरि वेणुसमूहे काचित् व्याघ्री व्रणिता, करुणया क्रन्दति। तां रक्षितुम्



इच्छन् अहं भवतीं नेतुम् अत्र आगतवान्। मम साहाय्यार्थं भवती आगन्तुं शक्नोति वा?" इति पृष्टवान् च।

"एवं वा? क्षणकालं तिष्ठतु। व्रणस्य उपरि लेपनार्थम् औषधरसम् अपि स्वीकृत्य एव गच्छाम" इति उक्तवती माता।

अनन्तरं मातापुत्रौ व्याघ्रीसमीपम् आगतवन्तौ। माता प्रीतिं प्रदर्शयन्ती लालन- वचनानि उक्तवती। पुत्रः उपायेन व्याघ्र्याः पादे लग्नं कण्टकं जागरूकतया निष्कासितवान्। व्याघ्री वेदनया विमुक्ता जाता। किन्तु सा स्वभावसहजां क्रूरतां न प्रदर्शितवती। अपि तु कृतज्ञतां प्रकटयन्ती इव मातरं पुत्रं च प्रीत्या आघ्रातवती। माता व्याघ्र्याः व्रणे औषधं लेपयित्वा तृप्त्या वेणुसमूहात् बहिः आगतवती।

अनन्तरं गन्तुम् उद्युक्ता सा माता- "व्याघ्रि! वयं दरिद्राः। मम पुत्राय कन्यां दातुं कोऽपि उत्साहं न प्रकटयति। भवत्याः परिचिता कापि कन्या यदि स्यात् तर्हि कृपया मम पुत्रस्य विवाहे साहाय्यम् आचरतु। तेन भवती अपि पुण्यवती भविष्यति" इति उक्त्वा पुत्रेण सह ततः गतवती।

अनन्तरं हेमन्तऋतोः अन्तिमे भागे काचित् वधूयात्रा तेन पर्वतमार्गेण आगता। वधूः तु धनिकस्य पुत्री। तैः सह अनेकानि अमूल्यानि आभरणानि धनकनकादीनि च आसन्। वधूः शिबिकायाम् उपविष्टवती आसीत्। चत्वारः दृढकायाः सेवकाः शिबिकायाः पुरतः पृष्ठतः च गच्छन्तः आसन्।

तदा अकस्मात् पञ्च व्याघ्राः वधू-यात्रायाः मार्गे आगत्य उपविष्टाः। ते गुर्गुरायन्ते स्म। पुच्छम् इतस्ततः चालयन्तः ते ततः निर्गमनत्वरां न प्रदर्शितवन्तः एव।

अकस्मात् आगतान् व्याघ्रान् दृष्ट्वा वधूयात्रासेवकाः वस्तूनि तत्रैव क्षिप्त्वा पलायनं कृतवन्तः। शिबिकावाहकाः अपि पलायनं कृतवन्तः। 'किं प्रवृत्तम्' इति जिज्ञासया वधूः शिबिकायाः द्वारम् उद्घाट्य बहिः आगतवती। तत्र एकः अपि सेवकः न दृश्यते! पञ्च व्याघ्राः तु पुच्छं चालयन्तः उपविष्टाः सन्ति!

ततः किञ्चित्कालानन्तरं युवकेन स्वगृहस्य द्वारताडनशब्दः श्रुतः। आश्चर्येण

उत्थाय सः द्वारम् उद्घाटितवान्। सुन्दरी वधूः द्वारस्य पुरतः स्थिता आसीत्। तस्याः पृष्ठतः पञ्च व्याघ्राः आसन्। तेषां मुखे मन्दहासः प्रीतिः च स्फुटं दृश्यते इव।

अनन्तरं युवकः तस्याः वध्वाः सम्मतिं प्राप्य तां परिणीतवान्। तया सह आनीतानि आभरणादीनि अपि युवकस्य गृहम् आगतानि। सा वधूः श्वश्र्वाः पत्युः च विधेया आसीत्। केषाञ्चित् दिनानाम् अनन्तरं वध्वाः पिता प्रवृत्तं सर्वं श्रुतवान्। सः पर्वतस्य अपरपार्श्वे निवसति। धनिकस्य तस्य प्रभावः सर्वत्र आसीत्। कुपितः सः न्यायाधिकारिणः पुरतः आक्षेपं कृतवान् यत् युवकः तस्य माता च मम पुत्रीम् अपहृतवन्तौ इति। न्यायाधिकारी युवकं, तदीयां मातरं च न्यायास्थानं प्रति आहूतवान्। न्यायविचारणम् आरब्धवान् च।

"अहं तां न अपहृतवान्। व्याघ्राः तां मम गृहस्य समीपम् आनीतवन्तः। तस्याः सम्मतिं प्राप्य तां परिणीतवान् अहम् इति तु सत्यम् एव" इति उक्तवान् युवकः।

न्यायाधिकारी एतत् न अङ्गीकृतवान्। "एषः यावत् सत्यं न अङ्गीकरोति तावत् कशया एतं प्रहरन्तु" इति आज्ञापितवान् सः।

तदा युवकस्य माता न्यायाधिकारिणः पादयोः पतन्ती– "मम पुत्रः सत्यम् एव वदति। यदि आवश्यकं तर्हि अहं तान् व्याघ्रान् इदानीम् एव आनयामि" इति उक्तवती।

वचनानुसारं धावन्ती गतवती, अल्पे एव



काले प्रत्यागतवती च। पञ्च महाव्याघ्राः ताम् अनुसृत्य आगतवन्तः।

व्याघ्रान् दृष्ट्वा न्यायास्थाने स्थिताः सर्वे पलायनं कृतवन्तः। न्यायाधीशः तु भीत्या कम्पमानः उन्नतं किञ्चन आसनम् आरुह्य व्याघ्रान् पश्यन्- "किम् एतत्!...." इति एकं वाक्यम् उक्तवान्। तदनन्तरं तस्य मुखतः एकोऽपि शब्दः न निर्गतः।

न्यायाधिकारिणः भावं ज्ञातवन्तः इव व्याघ्राः 'वयम् एव साक्षिणः' इति वदन्तः इव शिरः चालितवन्तः। न्यायविचारणा समाप्ता। युवकः मात्रा सह गृहं प्रत्यागतवान्।

तस्मिन् वर्षे ग्रीष्मकाले सहस्रशः अटविकाः अकस्मात् तस्य राज्यस्य उपरि आक्रमणं कृतवन्तः। तेषां सैन्ये क्रूराः शुनकाः, कृष्णमुखिनः वानराः, भयङ्कराः भल्लूकाः च अपि आसन्। राजा तु प्रतिभटनं कर्तुम् अशक्तः सञ्जातः।

सैनिकाः कर्तव्यबुद्ध्या युद्धार्थं तु गतवन्तः। किन्तु तेषां युद्धविद्यानैपुण्यं निष्प्रयोजकं जातम्। यतः आक्रमणकाराः अटविकाः तु युद्धनियमान् अजानन्तः स्वेच्छया आक्रमणं कुर्वन्ति स्म।

तत्समये कश्चित् महाराजाय काष्ठविक्रेतुः युवकस्य वार्तां निवेदितवान्।

तृणम् अपि महत्साहाय्यं मन्यमानः राजा तद्दिने एव युवकम् आनाय्य उक्तवान्– "भवतः व्याघ्रसाहाय्यम् अस्ति किल? केनापि उपायेन भवान् एतान् शत्रून् निवारयति चेत् भवन्तं सेनापतिस्थाने नियोजयिष्यामि" इति।

अटविकाः आक्रमणकाराः सैनिकानाम् आयुधेभ्यः न भीताः आसन् खलु? किन्तु इदानीं ते क्रूरान् पञ्च व्याघ्रान् दृष्ट्वा धैर्यच्युताः सन्तः आक्रोशनं कुर्वन्तः इतस्ततः धावितवन्तः।

महाराजस्य गौरवं रक्षितम् अभवत्। पूर्वं दत्तस्य वचनस्य अनुसारं राजा तं युवकं सेनापतिस्थाने नियोजितवान्। विशेषपुरस्कारं दत्त्वा योग्यं वेतनं निश्चित्य च 'पुरुषव्याघ्रः' इति बिरुदा तं सत्कृतवान् च।





# उत्तररामायणम्

शुक्रः, प्रोष्टपदः च कुबेरस्य मुख्यसचिवौ। ताभ्यां सह कुबेरः रावणस्य समीपं गत्वा "रे दुष्ट! मम हितवचनानि भवतः कर्णपथं न प्रविशन्ति अपि। अज्ञानेन यः विषं पिबति, सः विषस्य दुष्फलम् अनुभूय एव ज्ञानोदयं प्राप्नोति। किन्तु सः ज्ञानोदयः निष्प्रयोजकः। स्वीयम् अज्ञानं ज्ञातुं भवान् असमर्थः अस्ति। भवतः पतनं निवारयितुम् इच्छन् अहम् एतत् सर्वं वदन् अस्मि। भवान् तु स्वीयं दुराग्रहं नैव त्यजति। भवान् महत् तपः तप्त्वा महतीं सिद्धिं साधितवान्। किन्तु तेन किं वा प्रयोजनम्? नरकपीडायाः अनुभवकाले भवतः ज्ञानोत्पत्तिः भवेत्। इदानीं भवता सह वार्तालापः नाम वृथा कालहरणम् एव" इति तं निन्दितवान्।

कुबेरस्य वचनानि श्रुत्वा रावणः पूर्वापेक्षया उग्रतरः अभवत्। भ्रातृसम्बन्धम् अगणयन् सः मुष्टिं बद्ध्वा स्थितवान्। सहोदरयोः मध्ये द्वन्द्वयुद्धम् आरब्धम्। कुबेरेण प्रयुक्तानि सर्वाणि अस्त्राणि रावणः प्रत्यस्त्रैः परिहृत्य, मायायुद्धं कर्तुम् आरब्धवान्। तदा कुबेरः सर्वत्र बहुविधरूपाणि दृष्टवान्। किन्तु कुत्रापि रावणस्य रूपं नैव दृष्टम्। तस्मिन् समये रावणः अगोचरः सन् एव अधर्ममार्गेण कुबेरं गदया प्रहृत्य तम् अधः पातितवान्। तदा निधीनाम् अधिदेवताः रक्तसिक्तं कुबेरं दृष्ट्वा, तस्य चिकित्सां कारयितुं तं नन्दनवनं नीतवत्यः।

एवंरीत्या रावणः युद्धे विजयं साधयित्वा, कुबेरस्य पुष्पकविमानं गृहीत्वा, तस्मिन् उपविश्य, स्वयमेव विमानं चालयन् शरवणं

४. वेदवतीप्रतिज्ञा



गतवान्। इत्थं पुष्पकविमानस्य लाभेन रावणः दर्पोन्मत्तः अभवत्। एतादृशगर्वितेन सह विवादः मास्तु इति कुबेरः अपि तूष्णीं जातः।

पुष्पकविमानारूढः रावणः महता सन्तोषेण गच्छन् आसीत्। तदा सुवर्ण-वर्णीयः, द्वितीयसूर्यः इव शोभमानः शरवणपर्वतः दृष्टिगोचरः अभवत्। यदा रावणः तस्य उपरि गन्तुं प्रवृत्तः, तदा पुष्पकविमानः सहसा स्वीयचलनं स्थगयित्वा तूष्णीं स्थितः।

एतत् दृष्ट्वा रावणः "इच्छानुवर्ती एषः विमानः किमर्थं चलनं त्यक्त्वा स्थितवान्? किम् एषः कुबेरपक्षीयः स्यात्?" इति स्वपार्श्वस्थितान् सचिवान् पृष्टवान्।

अत्रान्तरे ईश्वरस्य पार्श्वधरः, महाबलिष्ठः च नन्दी रावणम् उद्दिश्य गम्भीरकण्ठेन "रे रे दशग्रीव! तत्रैव तिष्ठतु! अन्यमार्गेण दूरं गच्छतु। झटिति इतः प्रतिनिवर्तताम्। प्रवेशः अत्र निषिद्धः अस्ति। जागरूको भवतु! मार्गान्तरं गृहीत्वा दूरं गच्छतु" इति उक्तवान्।

तानि वचनानि शृण्वन् रावणः कोपावेशेन कम्पमानः "कुत्रास्ति रे भवतः मूर्खः शिवः?" इति भर्त्सयन् विमानतः अवतीर्य पर्वतसमीपं गतवान्।

तत्र शिवः, शिवस्य समीपे एव द्वितीयः शिवः इव दृश्यमानः शूलधरः नन्दीश्वरः च दृष्टौ। नन्दीश्वरस्य शृङ्गसहितं मुखं दृष्ट्वा "भवान् एव खलु मर्कटसदृशः सेवकः, यः मां जागरितवान्?" इति वदन् रावणः मेघः इव गर्जनं कुर्वन् अट्टहासं कृतवान्।

साक्षात् शङ्करसदृशः नन्दी रावणस्य अट्टहासं दृष्ट्वा क्रुद्धः भूत्वा "रे गर्वोन्मत्त! मम मुखं दृष्ट्वा मर्कटः इति उपहासं करोति खलु? भवन्तं भवतः समस्तकुलं च मत्समानशूराः वानराः युक्तेकाले अवश्यं नाशयिष्यन्ति। सम्यक् जानातु" इति शप्तवान्।

रावणः महान्तम् अनादरं प्रदर्शयन् पर्वतस्य समीपं गत्वा नन्दीश्वरम् उद्दिश्य "मम विमानस्य प्रतिरोधकम् एतं पर्वतम् एव इदानीम् उत्पाटयामि। अहं कीदृशः इति



वराकाः अत्रत्याः न जानन्ति इति मन्ये। इदानीं सर्वे जानन्तु" इति वदन् स्वहस्तान् पर्वतस्य अधः स्थापयन् पर्वतम् उन्नेतुं प्रयत्नं कृतवान्। पर्वतः किञ्चित् चलितः।

एतत्सर्वं पश्यन् शिवः स्मयमानः स्वीय-पादस्य अङ्गुष्ठेन पर्वतं स्पृष्टवान्।

तेन रावणस्य हस्ताः पर्वतस्य अधोभागे अन्तर्हिताः भूत्वा अतीव पीडिताः। तया पीडया रावणः महादारुणम् आक्रोशं कृतवान्। रावणस्य सचिवाः परस्परं परितप्यमानाः, रावणं "प्रभो! शङ्करं तर्पयतु। इदानीं तेन विना अन्यथा गतिः नास्ति। तम् एव शरणं गच्छतु। तस्य एव ध्यानं स्तुतिं च कृत्वा तं प्रीणयतु" इति सूचितवन्तः।

रावणः वेदनया रोदनं कुर्वन् शिवस्य स्तुतिं कृतवान्। तां स्तुतिं शृण्वतः शिवस्य क्रोधशमनम् अभवत्। अन्ते शिवः करुणया रावणस्य हस्तान् विमोचयितुं पर्वतस्य अधोभागं शिथिलीकृतवान्, तथा रावणं "भोः रावण, भवतः शौर्यं, स्तुतिः, मदः च परस्परं समानाः सन्ति। अहं प्रीतः सन्तुष्टः च। भवतः हस्तानां पीडया दारुणशब्दं कुर्वतः भवतः रावणः इति नाम सार्थकं जातम्। एतत् नामधेयम् एव यथा चिरकालं तिष्ठेत् तथा आचरितवान्। इदानीं भवान् स्वेच्छया गन्तुम् अर्हति" इति उक्तवान्।

तदा रावणः "महादेव! यदि निश्चयेन भवान् मद्विषये प्रीतः अस्ति, तर्हि वरदानेन माम् अनुगृह्णातु। ब्रह्मदेवः मह्यं दीर्घम् आयुष्यं दत्तवान्। इदानीं भवतः अनुग्रहेण ततोऽपि अधिकम् आयुष्यम् एकम् आयुधं च प्राप्तुम् इच्छामि। भवतः अनुग्रहस्य स्मरणार्थं कृपया मम इच्छाद्वयं पूरयतु महादेव!" इति सर्वान् हस्तान् अञ्जलिबद्धान् कृत्वा प्रार्थितवान्।

शिवः रावणाय अधिकम् आयुष्यं चन्द्रहासनामकं खड्गं च दत्त्वा "एतस्य खड्गस्य अनादरः कदापि मास्तु। एतस्य यदा अपमानः भविष्यति, तदा झटिति एषः खड्गः भवन्तं परित्यज्य मत्समीपं प्रत्यागमिष्यति। सम्यक् स्मरतु" इति उक्तवान्।

एवंरीत्या शिवेन वरान् प्राप्य रावणः पुनः



पुष्पकविमानम् आरुह्य समस्यभूमण्डले सञ्चारं कुर्वन् सर्वत्र भयम् उत्पादयन्, क्षोभं च जनयन् गतवान्। पराक्रमसम्पन्नाः केचन नृपाः तेन सह युद्धं कृत्वा स्वयं नष्टाः। चतुराः तु सः अजेयः इति ज्ञात्वा युद्धम् अकृत्वा एव पराजयम् अङ्गीकृत्य, 'भवदुक्तम् अनुसरामः' इति विनयेन प्रार्थितवन्तः।

इत्थं दिग्विजयपरायणः रावणः कदाचित् हिमालयं गत्वा, तत्र देवतास्त्रीसदृशीं काञ्चन रूपवतीं दृष्टवान्। सा तु ऋषयः इव कृष्णाजिनं जटावल्कलानि च धृत्वा तपः आचरितुम् उपविष्टा आसीत्।

रावणः तां दृष्ट्वा, तस्याः अतिशयसौन्दर्येण आकृष्टः मोहपरवशः च भूत्वा तस्याः समीपं गत्वा "हे सुन्दरि, एतस्यां नवयौवनावस्थायां किमर्थं तपः आचर्यते? किमर्थम् एतत् वैराग्यम्? भवत्याः परिश्रमं पश्यन् सोढुम् अहम् असमर्थः अस्मि" इति उक्तवान्।

सा नेत्रे उन्मील्य रावणं दृष्ट्वा, स्वीयं वृत्तान्तं सविस्तरं कथितवती—

"बृहस्पतेः पुत्रः शुक्रध्वजः मम पिता। मम नाम वेदवती इति। गन्धर्वाः, यक्षाः, राक्षसाः च मां प्राप्तुम् इच्छन्तः मम पितुः समीपम् आगत्य प्रार्थितवन्तः। किन्तु मम पिता तान् सर्वान् निराकृतवान्। किमर्थम् इति चेत् मम पिता विष्णुमूर्तिम् एव जामातरं कर्तुम् अपेक्षमाणः आसीत्। एतं वृत्तान्तं ज्ञात्वा, दण्डनामकः कश्चन राक्षसः एकस्यां रात्रौ निद्रामग्नं मम जनकं हतवान्। मम माता तु तदानीम् एव सहगमनं कृतवती। अहं तु मम पितुः इच्छां पूरयितुं दृढसङ्कल्पं कृत्वा, विष्णुम् एव मनसा पतिरूपेण भावयन्ती, तम् एव सदा स्मरन्ती तपोमग्ना अस्मि" इति।

तस्याः वचनानि श्रुत्वा रावणः हसन्, तस्याः अतिसमीपं गत्वा "हे अज्ञे! मुग्धबाले! भवत्याः बुद्धिः वक्रा जाता अस्ति। नो चेत् जगदेकसुन्दरी भूत्वा, स्वीयं यौवनं स्वयमेव नाशयितुं किमर्थं प्रवर्तते? अत्र पश्यन्, दशग्रीवः अहं लङ्काधीश्वरः अस्मि। भवती मम पत्नी भूत्वा समस्त-भोगान् अनुभवन्ती सौभाग्यशालिनी भवतु। अहं दीर्घायुः अस्मि। मां प्राप्य भवती

दीर्घसुमङ्गली भवतु। भवत्याः भाग्यम् अद्य फलितम् इति जानातु। भवतीम् उद्धर्तुं विधिः एव माम् अत्र प्रेषितवान् अस्ति इति चिन्तयतु" इति उक्तवान्।

"रे! गर्वोन्मत्त! भवान् कस्मिन् लोके अस्ति? भवतः विवेकः यदि स्यात् तर्हि, विष्णुं तिरस्कृत्य किमपि न वदेत्" इति उक्तवती वेदवती।

तत्क्षणेव रावणः तस्याः केशम् गृहीत्वा आकृष्टवान्। तदा वेदवती कोपावेशेन स्वीयहस्तौ खड्गाकारौ कृत्वा स्वीयं केशं कर्तितवती।

सा अग्निं प्रज्वाल्य, अग्निमध्ये स्थित्वा "रे नीच, भवता अवमानिता अहम् इतः परं जीवितुं न इच्छामि। एतस्मिन् अग्नौ मम पञ्च प्राणान् समर्पयामि। अनन्तरम् अयोनिजा भूत्वा पुनः जन्म प्राप्य, पतिव्रता सती भवतः मृत्युकारणं भविष्यामि" इति वदन्ती भस्मीभूता अभवत्।

एषा वेदवती एव अनन्तरकाले भूमौ सीतारूपेण जन्म प्राप्य, जनकस्य गृहे वर्धिता। विष्णोः अवतारभूतस्य रामस्य पत्नी भूत्वा, रामद्वारा रावणस्य वधं कारितवती च।

एवंरीत्या वेदवत्याः अग्निप्रवेशानन्तरं रावणः तस्याः कोपं वा शापं वा किञ्चिदपि अगणयन्, पुष्पकविमानम् आरुह्य, लोकसञ्चारं कुर्वन्, एकत्र क्रियमाणं कमपि



महायज्ञं दृष्टवान्।

तं यज्ञं मरुत्तमहाराजः देवानां सन्निधाने कुर्वन् आसीत्। बृहस्पतेः अनुजः संवर्तः मुख्यपुरोहितः भूत्वा यज्ञं कारयति स्म।

रावणस्य दर्शनसमनन्तरम् एव तत्र सम्मिलिताः दिक्पालकाः भयभ्रान्ताः भूत्वा, रावणात् स्वीयरक्षणार्थं भिन्नभिन्नरूपाणि धृतवन्तः। इन्द्रः मयूरस्य रूपं धृतवान्। यमः काकः अभवत्। कुबेरः सरटः जातः। वरुणः अश्वरूपं स्वीकृतवान्। एवम् एव अन्याः देवताः अपि भिन्नभिन्नप्राणिनां रूपाणि धृतवत्यः।

रावणः निश्शङ्कं यज्ञवाटिकां प्रविश्य मरुत्तराजं दृष्ट्वा "एतेन रावणेन सह युद्धं करोति वा? अथवा पराजयं स्वीकृत्य



तप्तमानः "पितृसदृशम् अग्रजं जित्वा भवान् महाधीमान् जातः वा? दग्धं भवतः धीमत्त्वम्! एतादृशदौष्ट्यं कृत्वा अपि पुनः गर्वम् अनुभवति किल? कीदृशः निर्लज्जः अस्ति भवान्! तिष्ठतु। मम बाणैः इदानीं भवतः प्राणान् अपहरामि" इति वदन् उत्थाय धनुर्बाणादिकं गृहीतवान्।

तदा संवर्तः मरुत्तमहाराजं निवारयन् "त्वरा मास्तु भोः। मम वचनं किञ्चित् शृणोतु तावत्। एतस्य महेश्वरयज्ञस्य मध्ये विघ्नः जायते चेत्, तेन वंशस्य समूलनाशः भविष्यति। यज्ञदीक्षाबद्धस्य भवतः कोपः वा, युद्धप्रयत्नः वा न क्षेमकरः। किञ्च एतस्मिन् युद्धे एतं राक्षसं हन्तुं भवान् न शक्नोति। एतं हन्तुं समर्थः इदानीं प्रपञ्चे कोऽपि नास्ति। अतः एषः दुर्जयः" इति उक्तवान्।

गुरोः वचनं श्रुत्वा मरुत्तराजः धनुः बाणान् च अधः निक्षिप्य, पुनः यज्ञदीक्षाबद्धः उपविष्टवान्। एतत् दृष्ट्वा रावणस्य सचिवः शुकः उच्चस्वरेण "जयः रावणस्य एव" इति उक्तवान्।

रावणः यज्ञवाटिकायाम् उपस्थितान् कांश्चन ऋषिजनान् हत्वा, तान् भक्षयित्वा च तृप्तः भूत्वा, स्वीयपुष्पकविमानम् आरुह्य ततः निर्गतवान्।

अनन्तरं दिक्पालकाः पुनः स्वीयरूपाणि धृतवन्तः। ते यस्य प्राणिनः रूपाणि धृतवन्तः तं तं विविधवरैः अनुगृहीतवन्तः।

शरणम् आगच्छति वा? किमपि एकं वचनं शीघ्रं वदतु" इति पृष्टवान्।

"भवान् कीदृशः रावणः रे?" इति मरुत्तः रावणं पृष्टवान्।

रावणः स्वीयमहाध्वनिना दशदिक्षु अपि प्रतिध्वनिम् उत्पादयन् स्मयमानः-"साधु साधु! दशग्रीवरावणम् अपि भवान् न जानाति वा! मम बलपराक्रमाणां परिचय-रहितः कोऽपि त्रिषु लोकेषु अपि नास्ति इति मम भावना आसीत्। तादृशः भवान् लब्धः। मम अग्रजं जित्वा एतत् पुष्पकविमानं वशीकृतवान् अस्मि। ज्ञातवान् वा? विरोधम् अकुर्वन् मदधीनः भवतु" इति उक्तवान्।

तस्य वचनं श्रुत्वा मरुत्तराजः कोपेन

ततः पूर्वं मयूराः कृष्णवर्णीयाः आसन्। इन्द्रः तेषां शरीराणि विविधवर्णरञ्जितानि कृत्वा तेभ्यः अपूर्वं सौन्दर्यं प्रदत्तवान्। स्वीयनेत्रसहस्रेण तेषां पुच्छानि अलङ्कृत्य, तान् सर्पभयरहितान् कृतवान्। स्वीयवर्षादानसमये तेषां महान् सन्तोषः यथा भवेत् तथा तान् अनुगृहीतवान्।

तथैव यमस्य अनुग्रहेण काकाः रोगरहिताः तथा सहजमरणरहिताः च अभवन्। एवमेव यदा काकाः भोजनं प्राप्य तृप्ताः भवन्ति, तदा स्वीयलोके स्थिताः पितृदेवताः तृप्ताः भवन्ति इति यमः नियमं कृतवान्।



वरुणस्य अनुग्रहेण हंसाः फेनसदृशीं देहकान्तिं प्राप्तवन्तः। तेषां कृते जलजीवनम् अतीव सुखदायकम् अभवत्। कुबेरः सरटान् सुवर्णवर्णीयान् कृतवान्। तेन वर्णेन सरटाः शोभमानाः अभवन्। एवंरीत्या अनेके प्राणिनः देवताभिः उपकारं प्राप्तवन्तः।

रावणः लोके सर्वत्र सञ्चरन् मरुत्तमहाराजं प्रथमं यथा पृष्टवान्, तथैव सर्वेषां महाराजानां समीपं गत्वा "मया सह युद्धं करोति वा, पराजयं स्वीकरोति वा?" इति पृच्छति स्म। दुष्यन्तः, सुरटः, गाधिः, गयः, पुरूरवाः इत्यादयः राजानः रावणस्य पुरतः पराजयम् अङ्गीकृतवन्तः। किन्तु अयोध्यां पालयन् अनरण्यमहाराजः धैर्येण रावणं युद्धार्थम् आहूतवान्।

तदा प्रवृत्ते युद्धे अनरण्यस्य असङ्ख्याकाः सैनिकाः काननाग्नौ मत्कुणाः इव मरणं प्राप्तवन्तः। अनन्तरं द्वन्द्वयुद्धम् आरब्धम्। तस्मिन् युद्धे अनरण्यस्य बाणाः रावणं किमपि कर्तुम् असमर्थाः व्यर्थाः अभवन्। अनरण्यः स्वीयमस्तके रावणस्य महत्प्रहारं प्राप्य रथात् अधः पतितवान्। इक्ष्वाकुवंशीयः सः प्राणान् त्यजन्, स्वीयवंशीयेनैव रावणः मरणं प्राप्नोतु इति शापं दत्तवान्।

एवंरीत्या रावणः गगनविहारं कुर्वन्, मानवसमूहे महत् भयम् उत्पादयन् अटन् आसीत्। तस्मिन् काले कदाचित् मेघानां मध्यभागात् आविर्भूतः नारदः तस्य पुष्पकविमानस्य पुरतः आगत्य स्थितवान्।

"भोः नारद, कः विशेषः?" इति रावणः नारदं पृष्टवान्।

नारदः– "वत्स, रावण, भवतः बलपराक्रमान् दृष्ट्वा मम तु महान् प्रमोदः सञ्जातः। किन्तु एकः विषयः मह्यं न रोचते। देवताभिः अपि मरणं मास्तु इति वरं प्राप्य भवान् अल्पानां मानवानाम् उपरि बलपराक्रमान् प्रदर्शयति किल? एतत् उचितं वा? मानवाः अनेकविधव्यसनैः, रोगैः, वार्धक्येन, सुलभमरणेन च विविधकष्टानि अनुभवन्तः सन्ति खलु? तान् सर्वान् यमः प्रतिक्षणं मारयन् एवं अस्ति। भवान् यमेन सह एव युद्धं कृत्वा तं मारयतु। एकं तं यमं भवान् मारयति चेत्, सर्वे परलोकाः अपि जिताः इव भविष्यन्ति" इति उक्तवान्।

"भोः नारद, अहं तु प्रथमं सौराकाशम्, अनन्तरं स्वर्गं च विजित्य त्रीन् लोकान् अपि स्वायत्तीकरिष्यामि। अनन्तरं समुद्रमथनं कृत्वा अमृतं सम्पादनीयम् इति चिन्तयन् अस्मि। ज्ञातं खलु?" इति उक्तवान् रावणः।

"अत्रैव समीपे विद्यमानं यमलोकं त्यक्त्वा अन्यत्र कुत्रचित् गच्छामि इति वदति खलु? किमिदं विचित्रम्? इदानीं प्रस्थितस्य भवतः गमनमार्गे एव यमलोकः अस्ति। एतत् कार्यं समाप्य, अवशिष्टकार्यम् अनन्तरं कर्तुं शक्येत किल?" इति उक्तवान् नारदः।

रावणः कालमेघः यथा गर्जति तथा अट्टहासं कुर्वन् "भोः नारद, बहु समीचीनम् उक्तवान्। अत्यन्तसन्तोषकारकं वचनम् एतत्। अहम् इदानीम् एव यमलोकं गमिष्यामि। चतुरः दिक्पालकान् जेष्यामि इति पूर्वमेव मया प्रतिज्ञा कृता। इदानीं गत्वा सर्वेषां प्राणिनां मरणभयोत्पादकस्य तस्य यमस्य हत्यां करिष्यामि" इति उक्त्वा, नारदं नमस्कृत्य, तस्य अनुज्ञां प्राप्य, स्वीयसचिवैः सह दक्षिणदिशं प्रति प्रस्थितवान्। तादृशं यमं रावणः कथं जेष्यति इति साक्षात् द्रष्टुम् इच्छन् नारदः अपि कुतूहलाविष्टः सन् यमनगरं प्रति प्रस्थितवान्।





# वाणिज्यतत्त्वम्

मयूरपुरग्रामे पूर्वं विश्वनाथः नाम कश्चन बालकः आसीत्। प्रसूतिसमनन्तरम् एव तदीया माता दिवङ्गता आसीत्। अनन्तरं यदा सः पञ्चवर्षीयः जातः तदा सर्पदंशनेन तदीयः पिता अपि दिवङ्गतः। एवं मन्दभाग्यः सः बाल्ये एव अन्येषां करुणायाः पात्रम् अभवत्।

'जननमात्रेण एषः मातुः मरणस्य कारणम् अभवत्' इति चिन्तयन्तः बन्धुजनाः एतस्मै आश्रयं न दत्तवन्तः। ग्रामीणाः केचन दयाशालिनः तदा तदा किञ्चित् आहारं यच्छन्ति स्म। एवं यत् प्राप्तं तत् खादन्, यत्र छाया तत्र शयनं कुर्वन् एषः विश्वनाथः दिनानि यापयति स्म।

किन्तु विश्वनाथः स्वभावेन न अलसः। किमपि कार्यं कुर्वन् एव तिष्ठति सः। य कोऽपि यत्किमपि कार्यं वदतु, एषः तत् करोति। 'मया न शक्यते' इति पदं तस्य मुखतः कदापि न आगच्छति। कृतस्य कार्यस्य प्रतिफलम् अपि न इच्छति सः।

अतः पूर्वं ये दयया भिक्षां दत्तवन्तः आसन् ते एव इदानीं विश्वनाथस्य स्वभावेन व्यवहारेण च तृप्ताः सन्तः तदा तदा खाद्यानि यच्छन्ति स्म। उत्तमं भोजनम् अपि परिवेषयन्ति स्म।

मयूरपुरग्रामस्य प्रमुखस्य नाम धर्मदासः इति। सः तदा तदा गृहकार्येषु विश्वनाथस्य उपयोगं स्वीकरोति स्म। अतः एव विश्वनाथविषये तस्य विशेषाभिमानः। 'केचन तद्द्वारा अधिककार्याणि कारयित्वा प्रतिफलं किमपि अदत्त्वा प्रेषयन्ति' इति सः जानाति। 'इतःपरम् एषः अन्येषां करुणायाः पात्रं न भवेत्। स्वतन्त्रं जीवनं यापयितुं यथा शक्नुयात् तथा काऽपि व्यवस्था करणीया' इति चिन्तितवान् सः।

एकदा सः विश्वनाथम् आहूय उक्तवान्– "भवतः गुणेन अहं सन्तुष्टः



अस्मि। अतः एव किमपि साहाय्यं कर्तुम् इच्छामि। मम गोष्ठतः भवान् चतस्रः महिषीः नयतु। क्षीरविक्रयणेन यत् धनं प्राप्यते तेन स्वतन्त्रजीवनं यापयतु। परमसमप्रेक्षत्वं कालान्तरे भवतः विकासं नाशयिष्यति। क्षीरवाणिज्येन यदा समर्थः भवति तदा मदीयमहिषीणां मूल्यं प्रत्यर्पयितुम् अर्हति भवान्'' इति।

विश्वनाथः कृतज्ञताभावेन धर्मदासस्य गोष्ठतः चतस्रः महिषीः नीतवान्। उत्तमे मुहूर्ते क्षीरवाणिज्यम् आरब्धवान् च। उत्तमं क्षीरम् अल्पेन मूल्येन सः विक्रीणाति स्म। लाभस्य चिन्तनम् एव न आसीत् तस्य।

तस्मिन् ग्रामे कालिन्दः नाम कश्चन क्षीरविक्रयिकः आसीत्। सः क्षीरे जलं संमिश्र्य विक्रीणाति। ग्राहकेभ्यः अधिकं मूल्यं स्वीकरोति च।

विश्वनाथस्य वाणिज्यरीतिं दृष्ट्वा कालिन्दः अतीव खिन्नः। एकदा सः विश्वनाथसमीपम् आगत्य– ''कीदृशी वाणिज्यरीतिः भवतः? वाणिज्ये लाभप्राप्तिः एव मुख्या किल? जलयोजनं विना क्षीरविक्रयणं करोति चेत् लाभः कथं भवेत्? भवतः जीवनयापनं, महिषीणां पालनपोषणं च कथम्? कथं वा भवान् धर्मदासस्य ऋणं प्रत्यर्पयिष्यति? अतः क्षीरे किञ्चित् जलं योजयतु। मूल्यम् अपि वर्धयतु। भवतः हितार्थम् एव एतत्सर्वं वदन् अस्मि'' इति वाणिज्यरहस्यं बोधितवान्।

तत् श्रुत्वा विश्वनाथः उक्तवान्– ''एतद्ग्रामीणाः सर्वे मदीयाः इति अहं चिन्तयामि। क्षीरे जलं यदि योजयेयं तर्हि अहं आत्मवञ्चना सम्पादितवान् इव। यत्किमपि वा भवतु, सत्येन प्रामाणिकतया च वाणिज्यं करोमि। यावान् लाभः लभ्यते तावत् पर्याप्तम्। स्वतन्त्रजीवनं यापयन् अस्मि इति आत्मतृप्तिः तु अस्ति एव। धर्मदासस्य ऋणं त्वरया प्रत्यर्पणीयम् इति नास्ति'' इति।

एकदा तद्ग्रामीणः क्षेमेन्द्रः स्वगृहस्य पुरतः उपविश्य विश्रान्तिसुखम् अनुभवन् आसीत्। तदा तेन मार्गेण गच्छन्तं विश्वनाथं सः दृष्टवान्। क्षेमेन्द्रस्य पुत्र्याः विवाहसन्दर्भे विश्वनाथः विशेषसाहाय्यम्

आचरितवान् आसीत्। अतः क्षेमेन्द्रः विश्वनाथं समीपम् आहूय– "किं भोः, वाणिज्यम् आरब्धवान् इति श्रुतवान्। कथं प्रचलति वाणिज्यम्? कियत् सम्पादितवान् एतावता?" इति पृष्टवान्।

"सम्पादनं किम्? क्षीरविक्रयणेन यावत् प्राप्यते तत् महिषीणां पोषणार्थम् एव व्ययितं भवति। भिक्षाजीवनापेक्षया एतत् वरम्। कथञ्चित् दिनानि गच्छन्ति" इति निराशया उक्तवान् विश्वनाथः।

तदा क्षेमेन्द्रः उक्तवान्– "क्षीरवाणिज्यं यदि लाभकरं नास्ति तर्हि मम गृहस्य पुरतः विद्यमाने रिक्ते स्थले शाकानि आरोपयतु। समीपे एव सरोवरे यथेष्टं जलम् अपि अस्ति। परिश्रमानुगुणं फलं लभ्यते। भवान् तु परिश्रमशीलः एव किल?" इति।

'एतत् अपि युक्तम् एव' इति चिन्तितवान् विश्वनाथः। तद्दिने एव सः धर्मदासस्य समीपं गत्वा– "भोः, क्षीरवाणिज्ये मया किमपि विशेषप्रयोजनं न दृष्टम्। अतः भवतः महिषीः प्रत्यर्पयन् अस्मि। मां क्षाम्यतु। इतःपरं शाकवाणिज्यं करणीयम् इति योजना अस्ति" इति उक्त्वा आगतवान्।

महिषीः धर्मदासाय प्रत्यर्प्य क्षेमेन्द्रस्य रिक्तायां भूमौ विश्वनाथः शाकबीजानि आरोपितवान्। अल्पे एव काले शाकानि प्रवृद्धानि। वाणिज्यम् आरब्धम्। उत्तमानि शाकानि सः अल्पमूल्येन विक्रीणाति स्म। अतः विक्रयणार्थं नीतानि शाकानि सर्वाणि अल्पे एव काले विक्रीतानि भवन्ति स्म।





विश्वासं प्रकटयन्ति खलु? अहं किं विश्वासद्रोही भवेयं वा?" इति।

विश्वनाथस्य शाकवाणिज्यम् अपि लाभं विना यथाकथञ्चित् प्रचलति स्म।

एवं स्थिते सभापतिः नाम पुष्पवणिक् विश्वनाथम् आहूय– "भोः, अहं वृद्धः सञ्जातः। इतःपरं पुष्पवाणिज्यं मया कर्तुं न शक्यते एव। मम पुत्राः तु उद्योगान्तरे नियुक्ताः सन्ति। यदि भवान् इच्छति तर्हि एतत् पुष्पवाणिज्यं भवते अर्पयामि। अदृष्ट-परीक्षां करोतु तावत्" इति उक्तवान्।

विश्वनाथः शाकवाणिज्यं परित्यज्य पुष्पमालाविक्रयणम् आरब्धवान्। सः म्लानानि, शुष्काणि च पुष्पाणि निष्कास्य उत्तमानि पुष्पाणि निरवकाशं योजयन् मालां रचयित्वा विक्रीणाति स्म। यावद्भिः पुष्पैः इतरे मालात्रयं निर्मान्ति, तावद्भिः एषः एकां मालां निर्माति स्म।

एतत् दृष्ट्वा सभापतिः उक्तवान्– "भोः, एतादृशेन व्यवहारेण भवान् हानिम् अनुभवेत्। मालायां म्लानानि अपि पुष्पाणि मध्ये मध्ये योजनीयानि। पुष्पाणि अपि किञ्चित् दूरे दूरे योजनीयानि, न तु निरवकाशम्। भवान् एकमालार्थं यावन्ति पुष्पाणि स्वीकरोति, तावद्भिः मालाद्वयं निर्मातुं शक्यते" इति।

तदा विश्वनाथः उक्तवान्– "अहं तु एकाकी। अल्पेन अपि सम्पादनेन मम जीवननिर्वहणं भवति एव। लाभेच्छया मम

एतत् सर्वं परिशील्य चक्रधरः नाम अन्यः शाकवणिक् विश्वनाथसमीपम् आगत्य उक्तवान्– "भवान् उत्तमानि शाकानि एव विक्रीणाति। अतः मूल्यम् अधिकं स्वीकरणीयम्। अथवा कीटदष्टानि प्राचीनानि च शाकानि योजयित्वा इतरे यावता मूल्येन विक्रीणन्ति तावता मूल्येन विक्रीणातु। वाणिज्ये हानिः यथा न भवेत् तथा विक्रयणं करणीयम्। केवलं प्रामाणिकता अत्र निष्प्रयोजिका" इति।

तदा विश्वनाथः पृष्टवान्– "अनाथं माम् एतद्ग्रामीणाः प्रीत्यादरैः पालितवन्तः। किमपि प्रयोजनम् इच्छन्तः ते मां पालितवन्तः न खलु? तेभ्यः अहं कथं विशेषलाभं प्राप्तुम् अर्हामि? अहं प्रामाणिकः इति कारणतः एव जनाः मयि

ग्रामीणान् वञ्चयितुम् अहं न सिद्धः" इति।

विश्वनाथस्य पुष्पमालाविक्रयणम् अपि विशेष लाभं विना एव प्रचलति स्म। सभापतिद्वारा एतस्य वार्तां श्रुत्वा ज्ञानगुप्तः नाम वणिक्श्रेष्ठः समीपम् आगत्य उक्तवान्– "विश्वनाथ, बहुभ्यः दिनेभ्यः भवतः व्यवहारं परिशीलयन् अस्मि। भवतः प्रामाणिकतया अहं सन्तुष्टः। 'भवान् जामाता भवतु' इति मम इच्छा। अतः भवान् कृपया मम पुत्रीं परिणयतु। यौतकरूपेण मदीयम् एकं धान्यापणं भवते ददामि" इति।

विश्वनाथः एतद्विषये स्वकीयम् अङ्गीकारं दत्तवान्। एतां वार्तां श्रुत्वा कालिन्दः, क्षेमेन्द्रः, सभापतिः च आश्चर्यचकिताः– 'विश्वनाथं वाणिज्ये अनर्हं ज्ञात्वा अपि एषः ज्ञानगुप्तः स्वपुत्रीं तस्मै ददाति किल' इति।

ते ज्ञानगुप्तसमीपं गत्वा निवेदितवन्तः– "भवान् विश्वनाथाय पुत्रीं दातुं निश्चितवान् इति श्रुतम्। विश्वनाथः वाणिज्यदक्षः न। तस्मै यम् आपणम् अर्पयति तत्र हानिः एव भवेत्, न तु लाभः। सः प्रामाणिकः स्यात्, किन्तु मुग्धः" इति।

"विश्वनाथः प्रामाणिकः इत्यत्र संशयः एव नास्ति। किन्तु सः मुग्धः न। कालान्तरे भवन्तः एव एतत् जानन्ति" इति ज्ञानगुप्तः तान् उक्तवान्।

अनन्तरं विश्वनाथेन सह ज्ञानगुप्तस्य पुत्र्याः विवाहः सवैभवं सम्पन्नः। विश्वनाथः ज्ञानगुप्तस्य आपणस्य यजमानः अभवत् अपि। तस्य प्रामाणिकतां जानन्तः ग्रामीणाः



तस्य आपणतः एव वस्तूनि क्रीणन्ति स्म। तथापि विश्वनाथस्य वाणिज्ये हानिः एव। तस्य एकः पुत्रः अपि जातः। 'जामातुः वाणिज्ये हानिः जायमाना अस्ति' इति जानन् अपि ज्ञानगुप्तः धनसाहाय्यं किमपि न कृतवान्।

यदा धनस्य महती न्यूनता आगता तदा पत्न्याः आभरणानि अपि विक्रेतव्यानि अभवन् विश्वनाथेन। आभरणानि यच्छन्ती विश्वनाथस्य पत्नी उक्तवती– "एतानि आभरणानि विक्रीतानि चेत् गृहे पुनः विक्रयणयोग्यं किमपि नास्ति। इदानीम् आवयोः पुत्रः अपि जातः। प्रामाणिकः अपि लोके हानिम् अनुभवति इति लोके कुत्रापि नास्ति। आत्मनः उदरपोषणं यावता भवेत् तावान् वा लाभांशः भवेत् वाणिज्ये" इति।

पत्न्याः वचनानि श्रुत्वा आश्चर्यम् अनुभवन् विश्वनाथः व्यथया– "ग्रामीणान् वञ्चयता, स्वार्थं चिन्तयता च मया लाभः प्राप्तव्यः इति किल भवत्याः अभिप्रायः? एवं तर्हि मम प्रामाणिकतायाः का गतिः?" इति पृष्टवान्।

तत्समये गृहं प्रविशन् सुता-जामात्रोः सम्भाषणं श्रुत्वा ज्ञानगुप्तः उक्तवान्– "विश्वनाथ! एतस्याः अभिप्रायः भवता प्रमाणिकता त्यक्तव्या इति न। वाणिज्ये लाभसम्पादनार्थं दुर्मिश्रणं वञ्चना वा शरणम् इति न। लाभस्य सर्वथा त्यागः अपि अनुचितः। न्याययुतं लाभांशं योजयित्वा विक्रीणीमः चेत् तत् कोऽपि न आक्षिपति। भवतः प्रामाणिकतायाः भङ्गः अपि न भवति। अत्याशा तु पापमूलम्। कालान्तरे एतत्सर्वं भवतः अनुभवे आगमिष्यति" इति।

विश्वनाथः एतत् अङ्गीकुर्वन् शिरः चालितवान्। ज्ञानगुप्तः वस्तूनि क्रेतुं विश्वनाथाय किञ्चित् धनसाहाय्यं कृतवान्। अनन्तरं विश्वनाथः लाभांशं योजयित्वा विक्रयणं कर्तुम् आब्धवान्। तस्य दुराशा नास्ति इत्यतः तदीये आपणे मूल्यम् इतरत्रापेक्षया न्यूनम् एव आसीत्। वस्तूनां गुणात्मकता अपि न न्यूना। अतः तस्य वाणिज्यं समीचीनतया एव प्रचलति स्म।





# प्रशंसनम्

आदित्यसेनमहाराजस्य आस्थाने अनेके उद्योगिनः आसन्। समस्यापरिहारार्थं बहवः जनाः महाराजस्य समीपम् आगच्छन्ति स्म। तस्मिन् समये प्रवर्तमानं लघुविषयं निमित्तीकृत्य अपि महाराजस्य मुखस्तुतिं कुर्वन्ति स्म आस्थानस्य उद्योगिनः। एतादृशानि प्रशंसावचनानि श्रुत्वा कदाचित् राजा खिन्नः भवति। एतानि केवलं प्रशंसावचनानि इति राजा जानाति च।

एकस्यां रात्रौ महत् शैत्यम् आसीत्। सोढुम् अपि कष्टकरम्। तादृशे शैत्ये अपि राजा आदित्यसेनः बहिः गन्तुं राजभवनात् प्रस्थितः। मुखस्तुतिं विना सहजतया यः सत्यं वदति तादृशः प्रामाणिकः कुत्रापि द्रष्टव्यः इति तस्य आशा।

राजा राङ्कवेण शरीरम् आच्छाद्य मार्गे गच्छन् आसीत्। किञ्चिद्दूरं यदा गतवान् तदा मार्गपार्श्वे विद्यमानस्य गृहस्य पुरतः शैत्यकारणेन शरीरं सङ्कोचीकृत्य शयितं कञ्चित् पुरुषं दृष्टवान् सः। तस्य विषये महाराजस्य कुतूहलं जातम्।

आदित्यसेनः तस्य समीपं गत्वा पृष्टवान् – "एवं शयनं कृतवान् किल? भवन्तं शैत्यं न बाधते वा?" इति।

तदा सः उक्तवान्– "मया आच्छादितं वस्त्रं छिन्नम्। अतः शैत्यवायुः एकत्र अन्तः प्रविश्य अन्यत्र बहिः गच्छति। भवतः राङ्कवं तु समीचीनम् अस्ति। यदि एकवारं शैत्यवायुः राङ्कवस्य अन्तः प्रविशति, तर्हि पुनः बहिः गन्तुं तस्य अवकाशः एव नास्ति। अतः शैत्यं सोढुम् अशक्तः भवान् कम्पते। अहं सोढुं शक्नोमि" इति।

तस्य विनोदयुक्तानि वचनानि श्रुत्वा राजा सन्तुष्टः। सः तं पृष्टवान्– "मम समीपे शतं सुवर्णनाणकानि सन्ति। तस्मिन् विंशतिनाणकानि भवते ददामि। महाराज-

सदृशः इति मम प्रशंसां करोति वा?" इति।

"विंशतिनाणकानि वा? केवलं विंशतिनाणकानां कृते एतादृशी प्रशंसा मया करणीया वा? एतत् न शक्यते" इति उक्तवान् सः।

"यदि मम समीपे विद्यमानेषु नाणकेषु अर्धं ददामि?" इति पृष्टवान् राजा।

"तदा आवां समानौ भवावः। भवान् श्रेष्ठः इति कथनस्य आवश्यकता एव न भवति" इति उक्तवान् सः दरिद्रः।

तस्य वचनानि श्रुत्वा राजा आदित्यसेनः अतीव सन्तुष्टः। 'इदानीम् अहं किमपि अनुक्त्वा मौनं गच्छामि चेत् एषः धनाशया माम् आह्वयेत्, पश्यामि' इति चिन्तयन् राजा मौनम् अग्रे गतवान्।

किन्तु दरिद्रः तं न आहूतवान्। राजा पुनः तस्य समीपम् आगतवान्।

"भोः, भवान् पुनः किमपि प्रष्टुं मम समीपम् आगतवान् इति भाति" इति उक्तवान् दरिद्रः।

"प्रष्टुं न आगतवान्। प्रशंसावचनानि श्रोतुम् आगतवान्। मम समीपे शतं नाणकानि सन्ति इति पूर्वमेव उक्तवान् किल? शतं नाणकानि अपि भवते ददामि। तदा 'महाराजसदृशः' इति मम प्रशंसां करोति वा?" इति पृष्टवान् राजा।

"भोः, सर्वाणि सुवर्णनाणकानि अपि मम एव चेत् पुनः किमर्थं प्रशंसनीयः भवान्? तस्य आवश्यकता एव नास्ति। आवश्यकं चेत् भवान् एव मम प्रशंसां कर्तुम् अर्हति। यतः मया दत्तं चेत् एव भवतः कष्टं निवारितं भवेत्" इति उक्त्वा हसितुम् आरब्धवान् सः दरिद्रः।

सन्तुष्टः आदित्यसेनः अपि तेन सह हसितवान्।

अनन्तरं राजा तस्मै दरिद्राय शतं सुवर्णनाणकानि अपि दत्त्वा आप्तसेवकस्थाने तं नियोजितवान्।

प्रवृत्तम् एतं विषयं श्रुत्वा आस्थानस्य उद्योगिनः तद्दिनादारभ्य पुनः पुनः महाराजस्य प्रशंसां यत् कुर्वन्ति स्म तत् त्यक्तवन्तः।



# चोरः

अवन्तीमहाराजस्य महती राज्याकाङ्क्षा। सः पार्श्वस्थानां राज्यानां महाराजैः सह बहुधा युद्धं करोति।

युद्धकारणतः वणिजः अन्याय्यम् आरब्धवन्तः। प्रकृतिकारणं बिना एव देशे कृतकः क्षामः उत्पन्नः।

आहारधान्यानाम् अभावतः देशे चौर्यम् अपि अधिकं जातम्। महाराजस्य धनभाण्डागारस्य चौर्यम् कर्तुम् प्रयत्नं कृतवान् इति कारणतः कश्चित् चोरः बद्धः।

"तं त्यजन्तु" इति मन्त्री भटान् उक्तवान्। चोरस्य निर्गमनानन्तरं राजा मन्त्रिणं पृष्टवान्– "किमर्थं चोरः त्यक्तः?" इति।

"क्षम्यताम् प्रभो, तेन चौर्यं कृतं, सत्यम्। किन्तु तादृशपरिस्थित्याः कारणीभूताः वयम् एव खलु" इति उक्तवान् मन्त्री।

एतेन वचनेन महाराजस्य ज्ञानोदयः अभवत्। तद्दिनादारभ्य युद्धविषयं त्यक्त्वा सः देशे शान्तिभद्रतां रक्षितुम् आरब्धवान्।





# चतुरः वेङ्कटरामः

कस्मिश्चित् ग्रामे वेङ्कटरामभट्टः आसीत्। प्रशंसाकरणे सः प्रसिद्धः। सम्भाषणसमये बहु चातुर्यं प्रदर्शयति। ग्रामे यत्र कुत्रापि शुभसमारम्भः भवति चेत् अपि एषः तत्र गच्छति। तत्र आगतानां प्रशंसां कुर्वन्, पद्यानि गायन् आगतान् सर्वान् सन्तोषयति च। सन्तुष्टाः तस्मै पारितोषिकं यच्छन्ति। एतादृशैः पारितोषिकैः एवं सः जीवनं यापयति। तस्मिन् काले शुभसन्दर्भेषु प्रशंसाकथनं सम्प्रदायः आसीत्।

तस्मिन् ग्रामे सामान्यतः सर्वेऽपि तस्मै यत्किञ्चित् ददति, दत्तवन्तः वा। किन्तु तस्य ग्रामस्य अधिपतिः भूस्वामी वेङ्कटरामाय एकं नाणकम् अपि न ददाति। तावान् कृपणः सः। भूस्वामिनः गृहे यदा यदा शुभकार्याणि प्रचलन्ति तदा एषः तत्र गत्वा प्रशंसावचनानि वदति, पद्यानि गायति च। किन्तु महाकृपणः भूस्वामी सर्वदा अपि "भोः! बहुसम्यक् प्रशंसापद्यं गीतवान्। एतदर्थं प्रत्येकतया भवते समीचीनं पारितोषिकं दातव्यम्। अग्रिमविशेषसन्दर्भे आगच्छति किल? तदा पश्यामः!" इति वदति स्म।

यद्यपि भूस्वामिनः गृहे बहूनि शुभकार्याणि प्रचलन्ति, तथापि वेङ्कटरामः ततः किमपि प्राप्तुं न शक्नोति।

गच्छति काले, भूस्वामिनः पुत्र्याः विवाहः निश्चितः। "एतत् महत् शुभकार्यम्। अस्मिन् शुभकार्यसमये भूस्वामिनः सकाशात् अमूल्यं पारितोषिकं प्राप्तव्यम् एव" इति वेङ्कटरामः निश्चितवान्। तस्य गृहे समीचीना धेनुः न आसीत्। अतः क्षीरं प्राप्तुं अतीव कष्टम् अनुभवति स्म वेङ्कटरामः।

अस्मिन् सन्दर्भे भूस्वामिनः सकाशात् पारितोषिकरूपेण समीचीना एका धेनुः प्राप्तव्या इति चिन्तितवान् वेङ्कटरामः।

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

सः भूस्वामिनः पुत्र्याः विवाहं गतवान्। भूस्वामी बन्धुमित्रैः सह उपविश्य वार्तालापं कुर्वन् आसीत्।

तदा वेङ्कटरामः वधूवरयोः आशीर्वादं कुर्वन् इव श्लोकान्, वचनानि, पद्यानि च उच्चरितवान्, उक्तवान् च – "धर्मदाता भूस्वामी अस्मिन् मङ्गलकार्य- समये आत्मनः मनोभीष्टसिद्ध्यर्थम् अस्य दरिद्रस्य अपि मनोभीष्टसिद्धिं यथा कुर्यात् तथा भगवान् अनुगृह्णातु" इति।

एतत्सन्दर्भे बन्धुमित्राणां मध्ये आसीत् इत्यतः केनापि व्याजेन पलायनं कर्तुं अशक्तः भूस्वामी "बहु समीचीनम्! भवतः इच्छा का?" इति वेङ्कटरामं पृष्टवान्।

"अहम् अतीव दरिद्रः। पत्नीपुत्राः अपि सन्ति। क्षीरयुक्ताम् एकां समीचीनां धेनुं दापयति चेत् वयं कृतार्थाः भवेम" इति उक्तवान् वेङ्कटरामः।

भूस्वामी एकं सेवकम् आहूय रहस्यतया तस्य कर्णे एकस्याः धेनोः परिचयम् उक्त्वा– "ताम् आनीय एतस्मै ददातु" इति उक्तवान्।

सेवकः गत्वा एकां धेनुम् आनीतवान्। सा धेनुः अतीव वृद्धा आसीत्। तां दृष्ट्वा अतिथयः सर्वेऽपि आश्चर्यचकिताः। वेङ्कटरामः इदानीं किं वदेत् इति सर्वेषाम् अपि कुतूहलम्।

वेङ्कटरामः किं करणीयम् इति न ज्ञातवान्। एषां धेनुः नीता चेदपि किमपि प्रयोजनं न भवति। न नीता चेत् भूस्वामिनः अवमाननं भवति। तां वृद्धां धेनुं निराकर्तुं वेङ्कटरामस्य एकः उपायः स्फुरितः।



सः धेनोः समीपं गतवान्। तस्याः कर्णे किमपि वदन् इव नटनं कृतवान्। अनन्तरं तस्याः मुखसमीपं स्वस्य कर्णं नीत्वा तया यत् उच्यते तत् शृण्वन् इव अभिनयं कृतवान्। एतत् दृष्ट्वा सर्वेऽपि आश्चर्यचकिताः।

"धेन्वा सह किं तत् रहस्यं सम्भाषणम्?" इति भूस्वामी वेङ्कटरामं पृष्टवान्।

"विशेषः कोऽपि नास्ति, महाप्रभो! अहम् अस्याः धेनोः सामर्थ्यं ज्ञातुं 'भवती गर्भं धरति वा?' इति एतां पृष्टवान्। तावदेव" इति उक्तवान् वेङ्कटरामः।

"धेनुः किम् उक्तवती?" इति भूस्वामी हसन् पृष्टवान्।

"अहं कृतयुगे महिषासुरस्य समीपे आसम्। सः आदिशक्त्या मरणं प्राप्तवान्। कृतयुगं समाप्तं चेत् अपि अहं न मृता। त्रेतायुगम् आगतम्। रावणः जन्म प्राप्य रामेण मरणं प्राप्तवान्। तदपि मया दृष्टम्। अनन्तरं द्वापरयुगे कंसः जन्म प्राप्तवान्। कृष्णः आगत्य कंसं मारितवान्। तदपि अहं स्वयं दृष्टवती। तथापि मया मरणं न प्राप्तम्। इदानीं कस्मिन् अपि विषये मम आसक्तिः एव नास्ति। महता वैराग्येण भूस्वामिनः आश्रये अस्मि। अस्य गोशालायां विद्यमानाः सर्वेऽपि मम एव सन्तानाः। तादृशीं मां दृष्ट्वा 'गर्भं धरति वा?' इति पृच्छति भवान्। मम अवमाननं करोति वा? इति पृच्छति एषा गोमाता" इति उक्तवान् वेङ्कटरामः।

तस्य वचनानि श्रुत्वा तत्र आगताः सर्वे उच्चैः हसितवन्तः।

बन्धुमित्राणां मध्ये अपमानः जातः इति भूस्वामी किञ्चिदिव खिन्नः। तथापि समञ्जनं कुर्वन् अधिकार- वाण्या कोपेन सेवकम् उक्तवान्– "बुद्धिः नास्ति वा भवतः? समीचीनां धेनुम् आनयतु इति मया उक्तम्। एतादृशीम् आनीतवान् किल भवान्! एतां नीत्वा समीचीनाम् आनयतु" इति।

सेवकः तां वृद्धां धेनुं नीत्वा समीचीनाम् आनीतवान्। वेङ्कटरामः पुनः अपि प्रशंसा–पद्यानि गीत्वा सन्तोषेण धेनुं नीतवान्।





## परमालसः!

अमेरिकादेशे उष्णप्रदेशे निवसन् 'स्लात्' जातीयः मार्जारः अति मन्दगामी चतुष्पादी इति परिगण्यते, यस्य पादे अङ्गुलित्रयम् एव भवति। एषः मार्जारः भूमौ ६.८ फुट् वेगेन, वृक्षे २ फुट् वेगेन च चलति।



## अतिप्राचीनं पुष्पसस्यम्!

गिङ्कगो नामकं पुष्पसस्यम् अतिप्राचीनम् इति परिगण्यते। यतः एतत् सस्यं १८,००,००,००० संवत्सरेभ्यः पूर्वं चैनादेशे आसीत्।

## अत्यधिकः तुषारपातः

केनडादेशे न्यू फौण्ड्ल्याण्ड्प्रदेशे ग्राण्ड्बाक्स्प्रदेशे च प्रपञ्चे एव अत्यधिकं धूमजातः तुषारपातः भवति। अत्र वर्षे सामान्यतः १२० दिनानि यावत् धूमजनितः तुषारपातः भवति एव।



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| उत्कीर्णः – | Carved |
| उत्पाट्य – | Having plucked |
| ऋणम् – | Loan |
| करताडनम् – | Clap |
| कशा – | Whip |
| कुक्कुटः – | Hen |
| कुञ्चिका – | Key |
| चक्रवातः – | Whirlwind |
| छदिः – | Roof |
| तण्डुलः – | Rice |
| दंशनम् – | Biting |
| दुर्मिश्रणम् – | Adulteration |
| धूमायते – | Emits smoke |
| निरवकाशम् – | Closely |
| न्यग्रोधः – | Banian |
| परशुः – | Axe |
| फेनः – | Lather |
| प्रसूतिः – | Delivery |
| प्रातिवेशिकः – | Neighbour |
| बाधते – | Obstructs |
| भल्लूकः – | Bear |
| मञ्जूषा – | Box |
| मत्कुणः – | Bedbug |
| महिषी – | Buffalo |
| मान्त्रिकः – | Sorcerer |
| मृच्छदः – | Tile |
| म्लानम् – | Faded |
| यौतकम् – | Gifts given in marriage |
| राङ्कवः – | Shawl |
| वल्कलम् – | Bark garment |
| वेणुः – | Bamboo |
| व्याघ्री – | Tigress |
| शाकम् – | Vegetable |
| शुनकः – | Dog |
| शुष्कम् – | Dried |
| सज्जीकृत्य – | Having arranged |
| सरटः – | Lizard |
| स्वेदः – | Sweat |
| * * | * * |



# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

**विजितां शीर्षिकां मार्च-८७ मासे प्रकटयिष्यामः।**





*उपरितन चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जनवरी-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'नवम्बर्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम् - **चक्रैः सरति च सततम्।**

द्वितीयचित्रम् - **सरणात् तरति च जलधिम्।**

प्रेषिका– कु॥ लक्ष्मी नागेश्वरी, ११४३/१६ कट्रमण्डी (द्वितिये अट्टे), अल्लहाबाद-२

---


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३०.००

**डाल्टन् एजन्सीस्**, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु-

**चन्दमामा पब्लिकेषन्स्**, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६.

**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**

# अपूर्वः पुरुषः भवान्!

| | | |
|---|---|---|
| I – | केन लिखितं चित्रम् एतत्? | By whom was this picture drawn? |
| II – | अन्येन केन? मया एव लिखितम्। | Who else by me of course. |
| I – | सत्यं वदतु रे। प्रतिदिनं सायं क्रीडाङ्गणे पश्यामि भवन्तम्! | Don't fool me! I see you at the playground every evening! |
| II – | ये क्रीडन्ति ते सर्वथा अप्रयोजकाः इति वा भवतः अभिप्रायः? | Then, do you mean to say all those who play are useless? |
| I – | तथा न, सामान्यतः क्रीडोत्सुकाः पठनादिषु अनासक्ताः भवन्ति। भवान् तु विद्याभ्यासे तीव्रः। चित्रलेखने निपुणः अपि! | Not that, but generally those who are interested in games are not even interested in studies. But, you study well and you are good at drawing too! |
| II – | पश्यतु भोः, अध्ययनं मम कर्तव्यम्। क्रीडायां तु प्रवृत्तिः। चित्रलेखने तु विशेषासक्तिः। | Learning is my business, playing games is my hobby and my special interest is drawing. |
| I – | चित्रलेखनं स्वयम् अभ्यस्तवान् वा? | You learnt to draw yourself? |
| II – | न, मम आसक्तिं दृष्ट्वा माता एव आरम्भे प्रोत्साहनं दत्तवती। इदानीं पार्श्वगृहस्थः वित्तकोषाधिकारी मया लिखितं चित्रं दृष्ट्वा इतिकर्तव्यतां बोधयति। स तु चित्रकलायां समर्थः। | No, finding me interested, my mother encouraged me at the beginning. Our neighbour, a bank officer, who saw the pictures drawn by me, teaches me the art. He is an accomplished artist. |
| I – | चित्रकला जन्मजाता प्रतिभा किल? | The art of drawing is inborn isn't it? |
| II – | तत् तु सत्यम्। किन्तु प्रयत्नः अपि तावान् एव अपेक्षितः। | Of course, it is, but effort is also necessary. |
| I – | एतत्सर्वं कर्तुं भवान् कथं समयं प्राप्नोति? | Where do you find time for all these? |
| II – | यत्र मनः तत्र सर्वं सिध्यति। एवं किल? | Where there is a will, there is a way, isn't it? |
| I – | अपूर्वः पुरुषः भवान्! | You are extraordinary indeed. |